No. 32 ] [ Price Rupee one.

23-10-1900

THE

# CHOWKHAMBA SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

# स्याद्वादमञ्जरी ।

विद्वद्वरमल्लिषेणप्रणीता

जैनदर्शननिरूपणपरा ।

आर्हतधुरन्धरश्रीसिद्धहेमचन्द्रनिर्मितवीतरागस्तुतिव्याख्यानरूपा ।

# SYADWADA MANJARI

BY

*MALLISHIENA*

WITH A COMMENTARY OF HEMCHANDRA.

EDITED BY

SRI DAMODAR LAL GOSWAMI.

*of the Government Sanskrit-College, Benares.*

FASCICULAS I.

*PUBLISHED AND SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT BOOK-DEPOT:

BENARES.

AGENT:—OTTO HARSASSOWITZ, LEIPZIG:

*Printed By Hari Das Gupta Proprietor*

AT THE VIDYA VILASA PRESS,

BENARES.

1900.

श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशातपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तवकः—३२

श्रीगणेशाय नमः ।

नमः सर्व्वज्ञाय ।

# स्याद्वादमञ्जरी ।

---

यस्य ज्ञानमनन्तवस्तुविषयं यः पूज्यते दैवतै ।
र्नित्यं यस्य वचो न दुर्न्नयकृतैः कोलाहलै र्लुप्यते ॥
रागद्वेषमुखद्विषां च परिषत् क्षिप्ता क्षणाद्येन सा ।
सश्रीवीरविभु र्विधूतकलुषां बुद्धिं विधत्तां मम ॥ १ ॥
निस्सीमप्रतिमैकजीवितधरो निःशेषभूमिस्पृशां ।
पुण्यौघेन सरस्वतीसुरगुरुस्वाङ्गैकरूपे दधत् ॥
यः स्याद्वादमसाधयन्निजवपुर्दृष्टान्ततः सोऽस्तु मे ।
सद्बुद्ध्यम्बुनिधिप्रबोधविधये श्रीहेमचन्द्रः प्रभुः ॥ २ ॥
ये हेमचन्द्रं मुनिमेतदुक्तग्रन्थार्थसेवामिषतः श्रयन्ते ।
सम्प्राप्य तेऽतः खलुपुष्कलानां पदं कलानामुचितं भजन्ति॥
मात र्भारति सन्निधेहि हृदि मे येनेयमाप्तस्तुते ।
र्निर्मातुं विवृतिं प्रसिद्ध्यति जवादारम्भसम्भावना ॥
यद्वा विस्मृतमोष्ठयोः स्फुरति यत्सारस्वतः शाश्वतो ।
मन्त्रः श्रीउदयप्रभेतिरचनारम्यो ममाहर्न्निशम् ॥ ४ ॥

इह हि विषमदुःखमारजनितिमिरतिरस्कारभास्करानुकारिणा वसुधातलावतीर्णसुधासारिणोद्देश्यदेनाक्षितानपरमार्हतीकृतश्रीकुमारपालक्ष्मापालप्रवर्त्तिताभयदानाभिधानजीवातुसंजीवितनानाजीवप्रदत्ताशीर्वादमाहात्म्यकल्पावधिस्थायिविशदयशःशरीरेण नि-

स्वबुद्धचातुर्विद्यनिर्माणैकब्रह्मणा श्रीहेमचन्द्रसूरिणा जगत्प्रसिद्धसिद्धसेनदिवाकरविरचितद्वात्रिंशद्द्वात्रिंशिकानुसारि-श्रीवर्द्धमानजिनस्तुतिरूपमयोगव्यवच्छेदान्ययोगव्यव-च्छेदाभिधानं द्वात्रिंशिकाद्वितयं विद्वज्जनमनस्तत्त्वाव-बोधनिबन्धनं विदधे तत्र च प्रथमद्वात्रिंशिकायाः सु-खोन्नेयत्वाद्व्याख्यानमुपेक्ष्य द्वितीयस्या निःशेषदुर्वादि-पर्षदधिक्षेपदक्षायाः कतिपयपदार्थविचारणाकरणेन स्वस्मृतिबीजप्रबोधविधि र्विधीयते तस्याश्चेदमादि-काव्यम् ॥

## अनन्तविज्ञानमतीतदोष-
## मबाध्यसिद्धान्तममर्त्यपूज्यम् ।
## श्रीवर्द्धमानं जिनमाप्तमुख्यं
## स्वयंभुवं स्तोतुमहं यतिष्ये ॥१॥

श्रीवर्द्धमानं जिनमहं स्तोतुं यतिष्य इति क्रि-यासंबन्धः किंविशिष्टमनन्तमप्रतिपाति विशिष्टं स-र्वद्रव्यपर्यायविषयत्वेनोत्कृष्टं ज्ञानं केवलाख्यं विज्ञानं ततोऽनन्तं विज्ञानं यस्य सोऽनन्तविज्ञानस्तं तथा अ-तीता निःसत्ताकीभूतत्वेनातिक्रान्ता दोषाः रागादयो यस्मात्स तथा तं तथा अबाध्यः परै र्बाधितुमशक्यः सि-द्धान्तः स्याद्वादश्रुतलक्षणो यस्य स तथा तं अमर्त्या देवा-स्तेषामपि पूज्यमाराध्यम् अत्र च श्रीवर्द्धमानस्वामिनो विशेषणद्वारेण चत्वारो मूलातिशयाः प्रतिपादिता-

स्तत्रानन्तविज्ञानमित्यनेन भगवतः केवलज्ञानलक्षणाविशिष्टज्ञानानन्त्यप्रतिपादनाज् ज्ञानातिशयः १ अतीतदोषमित्यनेनाष्टादशदोषसंक्षयाभिधानादपायापगमातिशयः २ अबाध्यसिद्धान्तमित्यनेन कुतीर्थिकोपन्यस्तकुहेतुसमूहाशक्यबाधस्याद्वादरूपसिद्धान्तप्रणयनभणनाद्वचनातिशयः ३ अमर्त्यपूज्यमित्यनेनाकृत्रिमभक्तिभरनिर्भरसुरासुरनिकायनायकनिर्मितमहाप्रातिहार्यसपर्यापरिज्ञापनात् पूजातिशयः ४ अत्राह परः अनन्तविज्ञानमित्येतावदेवास्तु नातीतदोषमिति गतार्थत्वाद्दोषात्ययं विनाऽनन्तविज्ञानत्वस्या नुपपत्ते रत्नोच्यते कुनयमतानुसारिपरिकल्पिताप्तव्यवच्छेदार्थमिदं तथाचाहु राजीविकनयानुसारिणः। ज्ञानिनो धर्मतीर्थस्य कर्त्तारः परमं पदं। गत्वा गच्छन्ति भूयोऽपि भवं तीर्थनिकारत इति त नून्यूनं ते अतीतदोषाः कथमन्यथा तेषां तीर्थनिकारदर्शनेपि भवावतारः आह यद्येवमतीतदोषमित्येवास्तु अनन्तविज्ञानमित्यतिरिच्यते दोषात्ययेऽवश्यंभावित्वादनन्तविज्ञानत्वस्य न कैश्चिद्दोषाभावेऽपि तदभ्युपगमात् तथा च तद्वचनम्।

सर्वं पश्यतु वा मा वा तत्वमिष्टं तु पश्यतु।
कीटसङ्ख्यापरिज्ञानं तस्य नः क्वोपयुज्यते ॥ १ ॥

तथा।

तस्मादनुष्ठानगतं ज्ञानमस्य विचार्यतां।
प्रमाणं दूरदर्शी चेदेते गृध्रानुपास्महे ॥ २ ॥

तन्मतव्यपोहार्थमनन्तविज्ञानमित्यदुष्टमेव विज्ञानानन्त्यं विना एकस्याप्यर्थस्य यथावत्परिज्ञानाभावात् तथाचार्षं "जे* एगं जाणइ से सव्वं जाणइ जे सव्वं जाणइ से एगं जाणइ" ।

तथा ।

एको भावः सर्वथा येन दृष्टः
सर्वे भावा सर्वथा तेन दृष्टाः ।
सर्वे भावा सर्वथा येन दृष्टाः
एको भावः सर्वथा तेन दृष्टः ॥ २ ॥ इति

ननु तर्हि अबाध्यसिद्धान्तमित्यपार्थकं यथोक्तगुणयुक्तस्याव्यभिचारिवचनेन तदुक्तसिद्धान्तस्य बाधायोगात् न अभिप्रायापरिज्ञानान्निर्दोषपुरुषप्रणीत एव अबाध्यः सिद्धान्तो नापरे पौरुषेयाद्या असम्भवादिदोषाघ्रातत्वात् इति ज्ञापनार्थं आत्ममात्रतारकमूकान्तकृत्केवल्यादिरूपपुद्गलकेवलिनो यथोक्तसिद्धान्तप्रणयनासमर्थस्य व्यवच्छेदार्थं वा विशेषणमेतत् अन्यस्त्वाह अमर्त्यपूज्यमिति न वाच्यं यावता यथोद्दिष्टगुणगरिष्ठस्य त्रिभुवनविभोरमर्त्यपूज्यत्वं न व्यभिचरतीति सत्यं लौकिकानां हि अमर्त्या एव पूज्यतया प्रसिद्धास्तेषामपि भगवानेव पूज्य इति विशेषणेनानेन ज्ञापयन्नाचार्यः परमेश्वरस्य देवाधिदेवत्वमावेदयति एवं पूर्वार्द्धे चत्वारोऽतिशया उक्ता अनन्तविज्ञानत्वं च सामान्यकेवलिनामप्यवश्यं भावीत्यतस्तद्व्यवच्छेदाय श्री-

* यो एकं जानाति स सर्वं जानाति यः सर्वं जानाति स एकं जानाति इतिच्छाया ।

वर्द्धमानमितिविशेष्यपदमपि विशेषणतया व्याख्यायते श्रिया चतुस्त्रिंशदतिशयसम्हानुभवात्मकमार्हन्त्य रूपतया वर्द्धमानं वर्द्धिष्णु नन्वतिशयानां परिमिततयैव सिद्धान्ते प्रसिद्धत्वात्कथं वर्द्धमानतोपपत्तिरितिचेन्न यथा निशीथचूर्णौ भगवतां श्रीमदर्हतामष्टोतरसहस्रसङ्ख्यबाह्यलक्षणसङ्ख्याया उपलक्षणत्वेनान्तरङ्गलक्षणानां सत्वादीनामानन्त्यमुक्तमेवमतिशयानामधिकृतपरिगणनायोगेऽप्यपरिमितत्वमविरुद्धं ततो नातिशयश्रिया वर्द्धमानत्वं दोषाश्रय इति अतीतदोषता चोपशान्तमोहगुणस्थानवर्तिनामपिसम्भवतीत्यर्थः क्षीणमोहाख्यप्रतिपातिगुणस्थानप्राप्तिप्रतिपत्त्यर्थं जिनमितिविशेषणं रागादिजेतृत्वाज्जिनः समूलकाषङ्कषितरागादिदोष इति अबाध्यसिद्धान्तता च श्रुतकेवल्यादिष्वपिदृश्यतेऽतस्तदपोहायाप्तमुख्यमितिविशेषणं आप्तिर्हि रागद्वेषमोहानामैकान्तिक आत्यन्तिकश्च क्षयः सा येषामस्ति ते खल्वाप्ताः अर्शआदित्वान्मत्वर्थीयोऽ प्रत्ययस्तेषु मध्ये मुखमिव सर्वाङ्गानां प्रधानत्वेन मुखस्य शाखादेर्य इति तुल्येयः अमर्त्यपूज्यता च तथाविधगुरूपदेशपरिचर्यापर्याप्तविद्याचरणसंपन्नानां सामान्यमुनीनामपि न दुर्घटा अतस्तन्निराकरणाय स्वयंभुवमितिविशेषणं स्वयमात्मनैवपरोपदेशनिरपेक्षतयावगततत्वो भवतीति स्वयंभूः स्वयंसंबुद्धस्तमेवंविधं चरमजिनेन्द्रं स्तोतुं स्तुतिविषयीकर्त्तुमहं यतिष्ये यत्नं करिष्यामि अत्र चा-

चार्यो भविष्यत्कालप्रयोगेण योगिनामप्यशक्यानुष्ठानं भगवद्गुणस्तवनं मन्यमान श्रद्धामेव स्तुतिकरणेऽसाधारणं कारणं ज्ञापयन् यत्करणमेव मदधीनं न पुनर्यथावस्थितभगवद्गुणस्तवनसिद्धिरिति सूचितवान् अहमिति च गतार्थत्वेऽपि परोपदेशान्यानुवृत्त्यादिनिरपेक्षतया निजश्रद्धयैव स्तुतिप्रारम्भ इतिज्ञापनार्थं अथवा श्रीवर्द्धमानादिविशेषणचतुष्टयमनन्तविज्ञानादिपदचतुष्टयेन सह हेतुहेतुमद्भावेन व्याख्यायते यत एव श्रीवर्द्धमानमतएवानन्तविज्ञानं श्रिया कृत्स्नकर्मक्षयाविर्भूतानन्तचतुष्कसंपद्रूपया वर्द्धमानं यद्यपि श्रीवर्द्धमानस्य परमेश्वरस्यानन्तचतुष्कसंपत्तेरुत्पत्त्यनन्तरं सर्वकालं तुल्यत्वाच्चयापचयौ न स्तस्तथापि निरपचयत्वेन शाश्वतिकावस्थानयोगाद्वर्द्धमानत्वमुपचर्यते यद्यपि च श्रीवर्द्धमानविशेषणेनानन्तचतुष्कान्तर्भावित्वेनानन्तविज्ञानत्वमपिसिद्धं तथाप्यनन्तविज्ञानस्यैव परोपकारसाधकतमत्वाद्भगवत्प्रवृत्तेश्च परोपकारैकनिबन्धनत्वादनन्तविज्ञानत्वं शेषानन्तत्रयात्पृथग् निर्द्धार्याचार्येणोक्तं ननु यथा जगन्नाथस्यानन्तविज्ञानं परार्थं तथानन्तदर्शनस्य केवलज्ञानापरपर्यायस्य पारार्थ्यमव्याहतमेव केवलज्ञानकेवलदर्शनाभ्यामेव हि स्वामी क्रमप्रवृत्तिभ्यामुपलब्धं सामान्यविशेषात्मकं पदार्थसार्थं परेभ्यः प्ररूपयति तत्किमर्थं तन्नोपात्तमिति चेदुच्यते विज्ञानशब्देन तस्यापि संग्रहाददोषः ज्ञानमात्रयोरुभयत्रापि समानत्वात् यएव हि अ-

भ्यन्तरीकृतसमतात्मधर्मा विषमताधर्मविशिष्टाज्ञानेन गम्यन्तेऽर्थास्त एव अभ्यन्तरीकृतविषमताधर्माः समताधर्मविशिष्टादर्शनेन गम्यन्ते जीवस्वाभाव्यात् सामान्यप्रधानमुपसर्ज्जनीकृतविशेषमर्थग्रहणं दर्शनमुच्यते तथा प्रधानविशेषमुपसर्जनीकृतसामान्यं च ज्ञानमिति तथा यत एव जिनमत एवातीतदोषं जेतृत्वाद्धि जिनः नचाजिनस्यातीतदोषता तथा यत एवाप्तमुख्यमत एवाबाध्यसिद्धान्तं आप्तो हि प्रत्ययित उच्यते तत आप्तेषु मुख्यं श्रेष्टं आप्तमुख्यत्वं च प्रभोरविसम्वादिवचनतया विश्वविश्वासभूमित्वात् अत एवाबाध्यसिद्धान्तं न हि यथावज्ज्ञानावलोकितवस्तुवादी सिद्धान्तः कुनयै र्बाधितुं शक्यते यत एव स्वयंभुवमत एवामर्त्यपूज्यं पूज्यते हि देवदेवो जगत्त्रयविलक्षणलक्षणेन स्वयंसम्बुद्धत्वगुणेन सौधर्मेन्द्रादिभिरमर्त्यैरिति अत्र च श्रीवर्द्धमानमितिविशेषणतया यद्व्याख्यानं तदयोगव्यवच्छेदाभिधानप्रथमद्वात्रिंशिकाप्रथमकाव्यतृतीयपादवर्त्तमानं श्रीवर्द्धमानाभिधमात्मरूपमिति विशेष्यमनुवर्त्तमानं बुद्धौ संप्रधार्य विज्ञेयं तत्र हि आत्मरूपमितिविशेष्यपदं प्रकृष्ट आत्मा आत्मरूपस्तं परमात्मानमिति यावत् आवृत्त्या वा विशेषणमपि विशेष्यतया व्याख्येयमिति प्रथमवृत्तार्थः ।१।

अस्यां च स्तुतावन्ययोगव्यवच्छेदोऽभिकृतस्तस्य च तीर्थान्तरीयपरिकल्पिततत्त्वाभासनिरासेन तेषामाभासत्वव्यवच्छेदः स्वरूपं तच्च भगवतो यथाऽवस्थितवस्तुत-

त्ववादित्वख्यापनेनैवप्रामाण्यमश्नुतेऽ तत्स्तुतिकारस्त्रि-जगद्गुरोर्निःशेषगुणस्तुतिश्रद्धालुरपि सद्भूतवस्तुवादित्वाख्यं गुणविशेषमेव वर्णयितुमात्मनोऽभिप्राय-माविष्कुर्वन्नाह ।

अयं जनो नाथ तवस्तवाय
गुणान्तरेभ्यः स्पृहयालुरेव ।
विगाहतां किन्तु यथार्थवाद-
मेकं परीक्षाविधिदुर्विदग्धः ॥२॥

हेनाथ अयं मल्लक्षणो जनस्तव गुणान्तरेभ्यो यथार्थवादव्यतिरिक्तेभ्योऽनन्यसाधारणशारीरलक्षणादिभ्यः स्पृहयालुरेव श्रद्धालुरेव किमर्थं स्तवाय स्तुतिकरणाय इयं तादर्थ्येचतुर्थी पूर्वत्र स्पृहेर्व्याप्यं वेति लक्षणा तव गुणान्तराण्यपि स्तोतुं स्पृहावानेवायं जन इति भावः ननु यदि गुणान्तरस्तुतावपि स्पृहयालुता तत्किमर्थं तदोपेक्षेत्याशङ्क्योत्तरार्द्धमाह किं त्वित्यभ्युपगमविशेषद्योतने निपातः एकमेकमेव यथार्थवादं यथावस्थितवस्तुतत्वप्रख्यापनाख्यं त्वदीयं गुणमयं जनो विगाहतां स्तुतिक्रियया समन्ताद् व्याप्नोतु तस्मिन्नेकस्मिन्नपि हि गुणे वर्णिते तन्त्रान्तरीयदैवतेभ्यो वैशिष्ट्यख्यापनद्वारेण वस्तुतः सर्वगुणस्तवनसिद्धिः अथ प्रस्तुतगुणस्तुतिः सम्यक्परीक्षाक्षमाणा-

मेव दिव्यदृशामौचितीमञ्चति नार्वाग्दृशां मत्त्रादृशा-
मित्याशङ्कां विशेषणद्वारेण निराकरोति यतोऽयं जनः
परीक्षाविधिदुर्विदग्धः अधिकृतगुणविशेषपरीक्षणा-
विधौ दुर्विदग्धः पण्डितंमन्य इति यावत् अयमाशयो
यद्यपि जगद्गुरोर्यथार्थवादित्वगुणपरीक्षणं मादृशां
मतेरगोचरस्तथापि भक्तिश्रद्धातिशयात् तस्यामहमा-
त्मानं विदग्धमिवमन्य इति विशुद्धश्रद्धाभक्तिव्यक्ति-
मात्ररूपत्वात्स्तुतेरितिवृत्तार्थः ॥ २ ॥

अथ ये कुतीर्थ्याः कुशास्त्रवासनावासितस्वान्त-
तया त्रिभुवनस्वामिनं स्वामित्वेन न प्रतिपन्नास्तानपि
तत्त्वविचारणां प्रतिशिक्षयन्नाह ।

गुणेष्वसूयां दधतः परेऽमी
मामिश्रियन्नाम भवन्तमीशं ।
तथापि सम्मील्य विलोचनानि
विचारयन्तां नयवर्त्म सत्यम् ॥३॥

अमी इति अदसस्तुविप्रकृष्ट इति वचनात्-
तत्त्वातत्त्वविमर्शबाह्यतया दूरीकरणार्हत्वाद्विप्रकृष्टाः
परे कुतीर्थिका भवन्तं त्वां अनन्यसामान्यसकल-
गुणनिलयमपि मा ईशं शिश्रियन् मा स्वामित्वेन-
प्रतिपद्यन्तां यतो गुणेष्वसूयां दधतो गुणेषु ब-
द्धमत्सराः गुणेषु दोषाविष्करणं ह्यसूया यो हि यत्र

मत्सरीभवति स तदाश्रयं नानुरुध्यते यथा माधुर्यमत्सरी करभः इक्षुकाण्डं गुणाश्रयश्च भवान् एवं परतीर्थिकानां भगवदाज्ञाप्रतिपत्तिं प्रतिषिध्य स्तुतिकारो माध्यस्थ्यमिवाख्याय तान् प्रति हितशिक्षामुत्तरार्द्धेनोपदिशति तथापि त्वदाज्ञाप्रतिपत्तेरभावेऽपि लोचनानि नेत्राणि सम्मील्य मिलितपुटीकृत्य सत्यं युक्तियुक्तं नयवर्त्म न्यायमार्गं विचारयन्तां विमर्शविषयीकुर्वन्तु अत्र च विचारयन्तामित्यात्मनेपदेन फलवत्कर्तृविषयेणैवं ज्ञापयत्याचार्यो यदवितथनयपथविचारणया तेषामेव फलं वयं केवलमुपदेष्टारः किं तत्फलमिति चेदुपेक्षावत्तेति ब्रूमः सम्मील्य विलोचनानि इति वदतः प्रायस्तत्वविचारणमेकाग्रताहेतुनयनमीलनपूर्वकं लोके प्रसिद्ध मित्यभिप्रायः अथ वा अयमुपदेशस्तेभ्यो रोचमान एवाचार्येण वितीर्यते ततोऽस्वदमानोऽप्ययं कटुकौषधपानन्यायेनायतिसुखत्वाद्भवद्भिर्नेत्रे निमील्य पेय एवेत्याकूतं ननु च यदि पारमेश्वरे वचसि तेषामविवेकातिरेकादरोचकिता तत्किमर्थं तान्प्रति उपदेश इति नैवं परोपकारसारप्रवृत्तीनां महात्मनां प्रतिपाद्यगतां रुचिमरुचिं वा ऽनपेक्ष्य हितोपदेशप्रवृत्तिदर्शनात्तेषां हि परार्थस्यैव स्वार्थत्वेनाभिमतत्वात् न च हितोपदेशादपरः पारमार्थिकपरार्थस्तथा चार्षम् ॥

रूसउ वा परो मा वा विसं वा परियत्तउ भासिअ ।
यव्वा हिया भासा स पक्खगुणकारिया ॥ १ ॥

उवाच वाचकमुख्यः ।

न भवतु धर्मः श्रोतुः सर्वस्यैकान्ततो हितश्रवणात् ।
ब्रुवतोऽनुग्रहबुद्ध्या वक्तुस्त्वेकान्ततो भवति इति
वृत्तार्थः ॥ ३ ॥

अथ यथावन्नयवर्त्मविचारमेव प्रपञ्चयितुं पराभिप्रेततत्त्वानां प्रामाण्यं निराकुर्वन्नादितस्तावत्काव्यषट्केनौलूक्यमततत्त्वानि दूषयितुकामस्तदन्तःपातिनौ प्रथमतरं सामान्यविशेषौ दूषयन्नाह ॥

**स्वतोऽनुवृत्तिव्यतिवृत्तिभाजो**
**भावा न भावान्तरनेयरूपाः ।**
**परात्मतत्त्वादतथात्मतत्त्वा-**
**द्वयं वदन्तोऽकुशला स्खलन्ति ॥ ४ ॥**

अभवन् भवन्ति भविष्यन्ति चेति भावाः पदार्थाः आत्मपुद्गलादय स्ते स्वत इति सर्वं हि वाक्यं सावधारणमामनन्तीति स्वत एवात्मीयस्वरूपादेवानुवृत्तिव्यतिवृत्तिभाज एकाकारा प्रतीतिरेकशब्दवाच्यता वानुवृत्ति र्व्यतिवृत्ति र्व्यावृत्ति र्विजातीयेभ्यः सर्वथा व्यवच्छेदस्ते उभे अपि संवलिते भजन्ते आश्रयन्तीति अनुवृत्तिव्यतिवृत्तिभाजः सामान्यविशेषोभयात्मका इत्यर्थः अस्यैवार्थस्य व्यतिरेकमाह न भावान्तरनेयरूपा इति नेति निषेधे भावान्तराभ्यां पराभिमताभ्यां द्रव्यगुणकर्मसमवायेभ्यः पदार्थान्तराभ्यां भावव्यतिरि-

क्तसामान्यविशेषाभ्यां नेयं प्रतीतिविषयं प्रापणीयं रूपं यथासंख्यमनुवृत्तिव्यतिवृत्तिलक्षणं स्वरूपं येषां ते तथोक्ताः स्वभाव एव हि अयं सर्वभावानां यदनुवृत्तिव्यावृत्तिप्रत्ययौ स्वत एव जनयन्ति तथा हि घट एव तावत्पृथुबुध्नोदराद्याकारवान् प्रतीतिविषयीभवन् सन् अन्यानपि तदाकृतिभृतः पदार्थान् घटरूपतया घटैकशब्दवाच्यतया प्रत्याययन् सामान्याख्यां लभते एवंचेतरेभ्यः सजातीयविजातीयेभ्यो द्रव्यक्षेत्रकालभावैरात्मानं व्यावर्तयन् विशेषव्यपदेशमश्नुत इति न सामान्यविशेषयोः पृथक्पदार्थान्तरत्वकल्पनं न्याय्यं पदार्थधर्मत्वेनैव तयोः प्रतीयमानत्वा न्न च धर्मा धर्मिणः सकाशादत्यन्तं व्यतिरिक्ता एकान्तभेदे विशेषणविशेष्यभावानुपपत्तेः करभरासभयोरिव धर्मधर्मिव्यपदेशाभावप्रसङ्गा च्च धर्माणामपि च पृथक्पदार्थान्तरत्वकल्पने एकस्मिन्नेव वस्तुनि पदार्थानन्त्यप्रसङ्गः अनन्तधर्मकत्वाद्वस्तुनः तदेवं सामान्यविशेषयोः तत्त्वं यथावदनवबुध्यमाना अकुशला अतत्त्वाभिनिविष्टदृष्टयस्तीर्थान्तरीयाः स्खलन्ति न्यायमार्गाद्भ्रश्यन्ति निरुत्तरीभवन्तीत्यर्थः स्खलनेन चात्र प्रामाणिकजनोपहसनीयता ध्वन्यते किं कुर्वाणाः द्वयं अनुवृत्तिव्यावृत्तिलक्षणं प्रत्ययद्वयं वदन्तः कस्मादेतत्प्रत्ययद्वयं वदन्त इत्याह परात्मतत्त्वात्परौ पदार्थेभ्यो व्यतिरिक्तत्वादन्यौ परस्परनिरपेक्षौ च यौ सामान्यविशेषौ तयो यदात्मतत्वं स्वरूपमनुवृत्तिव्या-

वृत्तिलक्षणं तस्मात्तदाश्रित्येत्यर्थः गम्यपः कर्माधारे इत्यनेन पञ्चमी कथंभूतात्परात्मतत्वादित्याह अतथात्मतत्त्वा त्माभू त्पराभिमतस्य परात्मतत्वस्य सत्स्वरूपतेति विशेषणमिदं यथा येनैकान्तभेदलक्षणेन प्रकारेण परैः प्रकल्पितं न तथा तेन प्रकारेणात्मतत्त्वं स्वरूपं यस्य तं तथा तस्मात् यतः पदार्थेष्वविष्वगुभावेन सामान्यविशेषौ वर्त्तेते तैश्च तौ तेभ्यः परत्वेन कल्पितौ परत्वं चान्यत्वं तच्चैकान्तभेदाविनाभावि किं च पदार्थेभ्यः सामान्यविशेषयोरेकान्तभिन्नत्वे स्वीक्रियमाणे एकवस्तुविषयं अनुवृत्तिव्यावृत्तिरूपं प्रत्ययद्वयं नोपपद्येत एकान्ताभेदे चान्यतरस्यासत्वप्रसङ्गः सामान्यविशेषव्यवहाराभावश्च स्यात् सामान्यविशेषोभयात्मकत्वेनैव वस्तुनः प्रमाणेन प्रतीतेः परस्परनिरपेक्षपक्षस्तु पुरस्तान्निर्लोठयिष्यते अत एव तेषां वादिनां स्खलनक्रिययोपहसनीयत्वमभिव्यज्यते यो हि अन्यथा स्थितं वस्तुस्वरूपमन्यथैव प्रतिपद्यमानः परेभ्यश्च तथैव प्रज्ञापयन् स्वयंनष्टः परान्नाशयति न खलु तस्मादन्य उपहासपात्रमिति वृत्तार्थः ॥ ४ ॥

अथ तदभिमतौ एकान्तनित्यानित्यपक्षौ दूषयन्नाह ।

आदीपमाव्योम समस्वभावं
स्याद्वादमुद्रानतिभेदि वस्तु ।

तन्नित्यमेवैकमनित्यमन्य-
दिति त्वदाज्ञाद्विषतां प्रलापाः॥५॥

आदीपं दीपादारभ्य आव्योम मर्यादीकृत्य सर्वं वस्तु पदार्थस्वरूपं समस्वभावं सम स्तुल्यः स्वभावः स्वरूपं यस्य स तथा किं च वस्तुनः स्वरूपं द्रव्यपर्यायात्मकमिति ब्रूमः तथा च वाचकमुख्यः "उत्पादव्ययध्रौव्ययुक्तं सदि"ति समस्वभावत्वं कुत इति विशेषणद्वारेण हेतुमाह स्याद्वादमुद्रानतिभेदि स्यादित्यव्ययमनेकान्तद्योतकं ततः स्याद्वादोऽनेकान्तवादो नित्यानित्याद्यनेकधर्मशबलैकवस्त्वभ्युपगम इति यावत्तस्य मुद्रा मर्यादा तां न अतिभिनत्ति नातिक्रामतीति स्याद्वादमुद्रानतिभेदि यथा हि न्यायैकनिष्ठे राजनि राज्यश्रियं शासति सति सर्वाः प्रजास्तन्मुद्रां नातिवर्त्तितुमीशते तदतिक्रमे तासां सर्वार्थहानिभावादेवं विजयिनि निष्कण्टके स्याद्वादमहीनरेन्द्रे तदीयमुद्रां सर्वेऽपि पदार्थाः नातिक्रामन्ति तदुल्लङ्घने तेषां स्वरूपव्यवस्थाहानिप्रसक्तेः सर्ववस्तूनां समस्वभावत्वकथनं च पराभीष्टस्यैकं वस्तु व्योमादि नित्यमेवान्यच्च प्रदीपाद्यनित्यमेवेति वादस्य प्रतिक्षेपबीजं सर्वे हि भावा द्रव्यार्थिकनयापेक्षया नित्याः पर्यायार्थिकनयादेशात्पुनरनित्यास्तत्रैकान्तानित्यतया परैरङ्गीकृतस्य प्रदीपस्य तावन्नित्यत्वव्यवस्थापने दिग्मात्रमुच्यते तथा

हि प्रदीपपर्यायापन्नास्तैजसाः परमाणवः स्वरसत-स्तैलक्षयाद्वाताभिघाताद्वा ज्योतिःपर्यायं परित्यज्य तमोरूपं पर्यायान्तरमासादयन्तोऽपि नैकान्तेनानित्याः पुद्गलद्रव्यरूपतयाऽवस्थितत्वात्तेषां नह्येतावतैवानित्यत्वं यावता पूर्वपर्यायस्य विनाश उत्तरपर्यायस्य चोत्पादः न खलु मृद्द्रव्यं स्थासककोशकुशूलशिवकघटाद्यवस्थान्तराण्यापद्यमानमप्येकान्ततो विनष्टं तेषु मृद्द्रव्यानुगमस्या बालगोपालं प्रतीतत्वा न्न च तमसः पौद्गलिकत्वमसिद्धं चाक्षुषत्वान्यथानुपपत्तेः प्रदीपालोकवत् अथ यच्चाक्षुषं तत्सर्वं स्वप्रतिभासि आलोकमपेक्षते नचैवं तम स्तत्कथं चाक्षुषं नैवं उलूकादीनामालोकमन्तरेणापि तत्प्रतिभासात् यैस्तु अस्मदादिभिरन्यच्चाक्षुषं घटादिकमालोकं विना नोपलभ्यते तैरपि तिमिरमालोकयिष्यते विचित्रत्वा द्भावानां कथमन्यथा पीतश्वेतादयोपि स्वर्णमुक्ताफलाद्या आलोकापेक्षदर्शनाः प्रदीपचन्द्रादयस्तु प्रकाशान्तरनिरपेक्षा इति सिद्धं तमश्चाक्षुषं रूपवत्वा च्च स्पर्शवत्वमपि प्रतीयते शीतस्पर्शप्रत्ययजनकत्वात् यानि त्वनिविडावयवत्वमप्रतिघातित्वमनुद्भूतस्पर्शविशेषत्वमप्रतीयमानखण्डावयविद्रव्यप्रतिभागत्वमित्यादीनि तमसः पौद्गलिकत्वनिषेधाय परैः साधनान्युपन्यस्तानि तानि प्रदीपप्रभादृष्टान्तेनैव प्रतिषेध्यानि तुल्ययोगक्षेमत्वात् न च वाच्यं तैजसाः परमाणवः कथं तमस्त्वेन परिणमन्त इति पुद्गलानां तत्तत्सामग्री-

सहकृतानां विसदृशकार्योत्पादकत्वस्यापि दर्शनात्
दृष्टो ह्यार्द्रेन्धनसंयोगवशाद्भास्वररूपस्यापि वन्हेरभास्व-
ररूपधूमरूपकार्योत्पादः इति सिद्धो नित्यानित्यः प्र-
दीपः यदापि निर्वाणादर्वाग् देदीप्यमानो दीपस्तदापि
नवनवपर्यायोत्पादविनाशभाक्त्वात् प्रदीपत्वान्वयाच्च
च नित्यानित्य एव एवं व्योमापि उत्पादव्ययध्रौव्यात्म-
कत्वान्नित्यानित्यमेव तथा हि अवगाहकानां जीव-
पुद्गलानामवगाहदानोपग्रह एव तल्लक्षणं "अवका-
शदमाकाशमिति" वचनात् यदा चावगाहका जीव-
पुद्गलाः संयोगतो विस्रसतो वा एकस्मान्नभःप्रदेशा-
त्प्रदेशान्तरमुपसर्पन्ति तदा तस्य व्योम्नस्तैरवगाहकैः
सममेकस्मिन्प्रदेशे विभाग उत्तरस्मिंश्च प्रदेशे संयोगः
संयोगविभागौ च परस्परं विरुद्धौ धर्मौ तद्भेदे चावश्यं
धर्मिणो भेद स्तथा चाहुः "अयमेव हि भेदो भेदहेतु
र्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चे"ति तत श्च तदा-
काशं पूर्वसंयोगविनाशलक्षणपरिणामापत्त्या विनष्टं
उत्तरसंयोगोत्पादाख्यपरिणामानुभवाच्चोत्पन्नमुभय-
त्राकाशद्रव्यस्यानुगतत्वाच्चोत्पादव्यययोरेकाकाशाधि-
करणत्वं तथा च य"दप्रच्युतानुत्पन्नस्थिरैकरूपं नि-
त्यमि"ति नित्यलक्षणमाचक्षते तदपास्तं एवंविधस्य
कस्यचिद्वस्तुनोऽभावात् "तद्भावाव्ययं नित्यमि"ति तु स-
त्यं नित्यलक्षणं उत्पादविनाशयोः सद्भावेपि तद्भावा-
दन्वयिरूपा न्न व्येति तन्नित्यमिति तदर्थस्य घटमान-
त्वा द्यदि हि अप्रच्युतादिलक्षणं नित्यमिष्यते तदो-

त्पादव्ययो निराधारत्वप्रसङ्गः न च तयो र्योगि नित्यत्वहानिः।

द्रव्यं पर्यायवियुतं पर्याया द्रव्यवर्जिताः।
क्व कदा केन किं रूपा दृष्टा मानेन केन वा ॥१॥ इति

वचनाल्लौकिकानामपि घटाकाशम् इति व्यवहारप्रसिद्धेराकाशस्य नित्यानित्यत्त्वं घटाकाशमपि हि यदा घटापगमे पटेनाक्रान्तं तदा पटाकाश मिति व्यवहारः न चायमौपचारिकत्वादप्रमाणमेव उपचारस्यापि किञ्चित्साधर्म्यद्वारेण मुख्यार्थस्पर्शित्वात् नभसो हि यत्किल सर्वव्यापकत्त्वं मुख्यं परिमाणं तत्तदाधेयघटपटादिसम्बन्धिनियतपरिमाणवशात्कल्पितभेदं सत्प्रतिनियतदेशव्यापितया व्यवह्रियमाणं घटाकाशपटाकाशादितत्तद्व्यपदेशनिबन्धनं भवति तत्तद्घटादिसम्बन्धे च व्यापकत्त्वेनावस्थितस्य व्योम्नोऽवस्थान्तरापत्ति स्तत श्चावस्थाभेदेऽवस्थावतोऽपिभेदस्तासां ततो विष्वग्भावादिति सिद्धं नित्यानित्यत्वं व्योम्नः स्वयंमुनोऽपि हि नित्यानित्यमेव वस्तु प्रपन्नास्तथा चाहु स्ते त्रिविधः खल्वयं धर्मिणः परिणामो धर्मलक्षणावस्थारूपः सुवर्णं धर्मि तस्य धर्मपरिणामो वर्द्धमानरुचकादिः धर्मस्य तु लक्षणपरिणामोऽनागतत्वादिः यदा खल्वयं हेमकारो वर्द्धमानकं भङ्क्त्वा रुचकमारचयति तदा वर्द्धमानको वर्तमानतालक्षणं हित्वा अतीततालक्षणमापद्यते रुचकस्तु अनागततालक्षणं हित्वा वर्तमानतामापद्यते वर्तमानतापन्न

एव रुचको नवपुराणभावमापद्यमानोऽवस्थापरिणा-मवान् भवति सोऽयं त्रिविधः परिणामो धर्मिणः धर्म-लक्षणावस्था स्व धर्मिणो भिन्नास्व तथा च ते धर्म्यभे-दात्तन्नित्यत्वेन नित्याः भेदाच्चोत्पत्तिविनाशविषयत्व-मित्युभयमुपपन्नमिति अथोत्तरार्द्धं विव्रियते एवं चो-त्पादव्ययध्रौव्यात्मकत्वे सर्वभावनां सिद्धेऽपि तद्वस्तु एकं आकाशात्मादिकं नित्यमेवान्यच्च प्रदीपघटादि-कमनित्यमेवेत्येवकारोऽत्रापि सम्बध्यते इत्थं हि दुर्न-यवादापत्तिरनन्तधर्मात्मके वस्तुनि स्वाभिप्रेतनित्य-त्वादिधर्मसमर्थनप्रवणाः शेषधर्म्मतिरस्कारेण प्रवर्त-माना दुर्नया इति तल्लक्षणात् इत्यनेनोल्लेखेन त्वदा-ज्ञाद्विषतां भवत्प्रणीतशासनविरोधिनां प्रलापाः प्र-लपितान्यसम्बद्धवाक्यानीति यावत् अत्र च प्रथममा-दीपमिति परप्रसिद्धया नित्यपक्षोल्लेखेऽपि यदुतरत्र यथासङ्ख्यपरिहारेण पूर्वतरं नित्यमेवैकमित्युक्तं तदेव ज्ञापयति यदनित्यं तदपि नित्यमेव कथं चिदाद्यं नित्यं तदप्यनित्यमेव कथं चिदेकान्तवादिभिरप्येकस्यामेव-पृथिव्यां नित्यानित्यत्वाभ्युपगमात् तथा च प्रशस्तकारः सा तु द्विविधा नित्याऽनित्या च परमाणुलक्षणा नि-त्या कार्यलक्षणा त्वनित्येति न चात्र परमाणुद्रव्य-कार्यलक्षणविषयद्वयभेदान्नैकाधिकरणं नित्यानित्यत्व-मिति वाच्यं पृथिवीत्वस्योभयत्राप्यव्यभिचारात् एवम-वादिष्वपीति आकाशेऽपि संयोगविभागाङ्गीकारात् तैरनित्यत्वं युक्त्या प्रतिपन्नमेव तथा च स एवाह श-

इकारणत्त्ववचनात्संयोगविभागाविति नित्यानित्यपक्षयोः सम्बलितत्वं एतच्च लेशतो भावित मेवेति प्रलापप्रायत्त्वं च परवचनानामित्थं समर्थनीयं वस्तुनस्तावदर्थक्रियाकारित्वं लक्षणं तच्चैकान्तनित्यानित्यपक्षयोर्न घटते अप्रच्युतानुत्पन्नस्थिरैकरूपो हि नित्यः स च क्रमेणार्थक्रियां कुर्वीत अक्रमेण वा अन्योन्यव्यवच्छेदरूपाणां प्रकारान्तरासम्भवात् तत्र न तावत्क्रमेण स हि कालान्तरभाविनीः क्रियाः प्रथमक्रियाकाल एव प्रसह्य कुर्यात् समर्थस्य कालक्षेपायोगात् कालक्षेपिणो वा ऽसामर्थ्यप्राप्तेः समर्थोऽपि तत्तत्सहकारिसमवधाने तं तमर्थं करोतीति चेन्न तर्हि तस्य सामर्थ्यमपरसहकारि सापेक्षवृत्तित्वात् सापेक्षमसमर्थमिति न्यायात् न तेन सहकारिणोऽपेक्ष्यन्तेऽपि तु कार्यमेव सहकारिष्वसत्स्वभवत् तानपेक्षते इति चेत् तत् किं स भावोऽसमर्थः समर्थो वा समर्थश्चेत्किं सहकारिमुखप्रेक्षणदीनानि तान्यपेक्षते न पुन र्झटिति घटयति ननु समर्थमपि बीज मिलाजलानिलादिसहकारिसहितमेवाङ्कुरं करोति नान्यथा तत् किं तस्य सहकारिभिः किञ्चिदुपक्रियेत न वा यदि नोपक्रियेत तदा सहकारिसन्निधानात्प्रागिव किं न तदाप्यर्थक्रियायामुदास्ते उपक्रियेत चेत् तर्हि तैरुपकारोऽभिन्नो भिन्नो वा क्रियत इति वाच्यम् अभेदे स एव क्रियत इति लाभमिच्छतो मूलक्षतिरायाता कृतकत्त्वेन तस्यानित्यत्वापत्तेः भेदे तु स कथं त-

स्योपकारः किं न सह्यविन्ध्यादेरपि तत्संबन्धात्तस्याय-मिति चेत् उपकार्योपकारयोः कः सम्बन्धो न ताव-त्संयोगो द्रव्ययो रेव तस्य भावात् अत्र तु उपकार्यं द्र-व्यं उपकार स्च क्रियेति न संयोगः नापि समवाय-स्तस्यैकत्वाद् व्यापकत्वाच्च प्रत्यासत्तिविप्रकर्षाभावे-न सर्वत्र तुल्यत्वान्न नियतैः सम्बन्धिभिः संबन्धो युक्तः नियतसंबन्धिसंबन्धे चाङ्गीक्रियमाणे तत्कृत उपका-रोऽस्य समवायस्याभ्युपगन्तव्य स्तथा च सत्युपकारके भेदाभेदकल्पना तदवस्थैव उपकारस्य समवायादभेदे समवाय एव कृतः स्यात् भेदे पुनरपि समवायस्य न नियतसम्बन्धिसंबन्धत्वं तन्नैकान्तनित्यो भावः क्रमेणा-र्थक्रियां कुरुते नाप्यक्रमेण नन्वेको भावः सकलका-लकलाकलापभाविनी र्युगपत् सर्वाः क्रियाः करोती-ति प्रातीतिकं कुरुतां वा तथापि द्वितीयक्षणे किं कुर्यात् करणे वा क्रमपक्षभावी दोषः अकरणे त्व-र्थक्रियाकारित्वाभावादवस्तुत्वप्रसङ्गः इत्येकान्तनित्या-त् क्रमाक्रमाभ्यां व्याप्तार्थक्रिया व्यापकानुलब्धिबला-द्व्यापकनिवृत्तौ निवर्तमाना स्वव्याप्यमर्थक्रियाकारित्वं निवर्तयति अर्थक्रियाकारित्वं च निवर्तमानं स्वव्या-प्यं सत्वं निवर्त्तयतीति नैकान्तनित्यपक्षो युक्तिक्षमः एकान्तानित्यपक्षोऽपि न कक्षीकरणार्हः अनित्यो हि प्रतिक्षणविनाशी स च न क्रमेणार्थक्रियासमर्थो दे-शकृतस्य कालकृतस्य च क्रमस्यैवाभावात् क्रमो हि पौर्वापर्यं तच्च क्षणिकस्यासम्भवि अवस्थितस्यैव हि

नानादेशकालव्याप्ति देंशक्रमः कालक्रम श्चाभिधीयते न चैकान्तविनाशिनि सास्ति। यदाहुः

यो यत्रैव स तत्रैव यो यदैव तदैव सः।
न देशकालयो र्व्याप्ति र्भावानामिह विद्यते ॥१॥

न च सन्तानापेक्षया पूर्वोत्तरक्षणानां क्रमः सम्भवति सन्तानस्यावस्तुत्वाद्वस्तुत्वेऽपि तस्य यदि क्षणिकत्वं न तर्हि क्षणेभ्यः कश्चिद्विशेषः अथाक्षणिकत्वं तर्हि समाप्तः क्षणभङ्गवादः नाप्यक्रमेणार्थक्रिया क्षणिके सम्भवति सह्येको वीजपूरादिक्षणो युगपदनेकान् रसादिक्षणान् जनयन् एकेन स्वभावेन जनयेन्नानास्वभावै र्वा यद्येकेन तदा तेषां रसादिक्षणानामेकत्वं स्यादेकस्वभावजन्यत्वादथ नाना स्वभावै र्जनयति किञ्चिद्रूपादिकमुपादानभावेन किंचिद्रसादिकं सहकारित्वेनेति चेत् तर्हि स्वभावास्तस्य अनात्मभूता आत्मभूता वा अनात्मभूता श्चेत् स्वभावत्वहानिः यद्यात्मभूतास्तर्हि तस्यानेकत्वं अनेकस्वभावत्वात् स्वभावानां वा एकत्वं प्रसज्येत तदव्यतिरिक्तत्वात्तेषां तस्य चैकत्वादथ य एव एकत्रोपादानभावः स एवान्यत्र सहकारिभाव इति न स्वभावभेद इष्यते तर्हि नित्यस्यैकरूपस्यापि क्रमेण नानाकार्यकारिणः स्वभावभेदः कार्यसांकर्यं च कथमिष्यते क्षणिकवादिना अथ नित्यमेकरूपत्वादक्रमं अक्रमाच्च क्रमिणां नानाकार्याणां कथमुत्पत्तिरिति चेदहो स्वपक्षपाती देवानांप्रियो यः खलु स्वयमेकस्मान्निरंशा-

द्रूपादिक्षणात्कारणाद्युगपदनेककारणसाध्यान्यनेककार्याण्यङ्गीकुर्वाणोऽपि परपक्षे नित्येऽपि वस्तुनि क्रमेण नानाकार्यकरणेऽपि विरोधमुद्भावयति तस्मात्क्षणिकस्यापि भावस्याऽक्रमेणार्थक्रिया दुर्घटा इत्यनित्यैकान्तात्क्रमाक्रमयो र्व्यापकयो र्निवृत्त्यैव व्याप्यार्थक्रियापि व्यावर्त्तते तद्व्यावृत्तौ च सत्वमपि व्यापकानुपलब्धिबलेनैव निवर्त्तते इत्येकान्तं नित्यवादोपि न रमणीयः स्याद्वादे तु पूर्वोत्तराकारपरिहारस्वीकारस्थितिलक्षणपरिणामेन भावानामर्थक्रियोपपत्तिरविरुद्धा नचैकत्र वस्तुनि परस्परविरुद्धधर्माध्यासायोगादसन् स्याद्वाद इति वाच्यं नित्यानित्यपक्षविलक्षणस्य पक्षान्तरस्याङ्गीक्रियमाणत्वा त्तथैव च सर्वैरनुभवात् तथा च पठन्ति ।

भागे सिंहो नरो भागे योऽर्थो भागद्वयात्मकः ।
तमभागं विभागेन नरसिंहं प्रचक्षते ॥ १ ॥ इति

वैशेषिकैरपि चित्ररूपस्यैकस्यावयविनोऽभ्युपगमादेकस्यैव पटादेश्चलाचलरक्तारक्तावृतानावृतत्त्वादिविरुद्धधर्माणामुपलब्धेः सौगतैरप्येकत्र चित्रपटीज्ञाने नीलानीलयो र्विरोधानङ्गीकारात् अत्र च यद्यप्यधिकृतवादिनः प्रदीपादिकं कालान्तरावस्थायित्वात् क्षणिकं न मन्यन्ते तन्मते पूर्वापरान्तावच्छिन्नायाः सत्ताया एव नित्यतालक्षणात् तथापि बुद्धिसुखादिकं तेऽपि क्षणिकतयैव प्रतिपन्ना इति तदधिकारेऽपि क्षणिकवादचर्चा नानुपपन्ना यदापि च कालान्तरावस्थायि वस्तु

तदापि नित्यानित्यमेव क्षणोऽपि न खलु सोऽस्ति यत्र वस्तु उत्पादव्ययध्रौव्यात्मकं नास्तीति काव्यार्थः।

अथ तदभिमतमीश्वरस्य जगत्कर्तृत्वाभ्युपगमं मिथ्याभिनिवेशरूपं निरूपयन्नाह।

**कर्त्तास्ति कश्चिज्जगतः स चैकः**
**स सर्वगः स स्ववशः स नित्यः।**
**इमाः कुहेवाकविडम्बनाः स्यु-**
**स्तेषां न येषामनुशासकस्त्वम्॥६॥**

प्रत्यक्षादिप्रमाणोपलक्ष्यमाणचराचररूपस्य विश्वत्रयस्य कश्चिदनिर्वचनीयस्वरूपः पुरुषविशेषः कर्त्ता स्रष्टा अस्ति विद्यते ते हि इत्थं प्रमाणयन्ति उर्व्वीपर्वततर्वादिकं सर्वं बुद्धिमत्कर्तृकं कार्य्यत्वात् यद्यत्कार्यं तत्तत्सर्वं बुद्धिमत्कर्त्तृकं यथा घटस्तथा चेदं तस्मा त्तथा व्यतिरेके व्योमादि यश्च बुद्धिमांस्तत्कर्त्ता स भगवानीश्वर एवेति न चायमसिद्धो हेतु र्यतो भूभूधरादेः स्वस्वकारणकलापजन्यतया अवयवितया वा कार्य्यत्वं सर्ववादिनां प्रतीतमेव नाप्यनैकान्तिको विरुद्धो वा विपक्षादत्यन्तव्यावृत्तत्वात् नापिकालात्ययापदिष्टः प्रत्यक्षानुमानागमाबाधितधर्म्मधर्म्यनन्तरप्रतिपादितत्वा न्नापि प्रकरणसमः तत्प्रतिपन्थिधर्म्मोपपादनसमर्थंप्रत्यनुमानाभावात् न च वाच्यमीश्वरः पृथ्वीपृथ्वीधरादे र्विधाता न भवति अशरीरत्वान्निर्वृ तात्मवदिति

प्रत्यनुमानं तद्बाधकमिति यतोऽसेश्वररूपो धर्मी प्रतीतो ऽप्रतीतो वा प्ररूपितः न तावदप्रतीतो हेतोराश्रयासिद्धिप्रसङ्गात् प्रतीतस्से त्केन प्रमाणेन स प्रतीतस्तेनैव किं स्वयमुत्पादितस्वतनु नं प्रतीयते इत्यतः कथमशरीरत्वं तस्मान्निरवद्य एवायं हेतुरिति सचैक इति चः पुनरर्थे स पुनः पुरुषविशेष एको ऽद्वितीयः बहूनां हि विश्वविधातृत्त्वस्वीकारे परस्परविमतिसंभावनाया अनिवार्यत्त्वादेकैकस्य वस्तुनोऽन्यान्यरूपतया निर्माणे सर्वमसमञ्जसमापद्येतेति तथा स सर्वग इति सर्वत्र गच्छतीति सर्वगः सर्वव्यापी तस्य हि प्रतिनियतदेशवर्त्तित्वे नियतदेशवृत्तीनां विश्वत्रयान्तर्वर्त्तिपदार्थसार्थानां यथावन्निर्माणानुपपत्तिः कुम्भकारादिषु तथा दर्शना दथ वा सर्वं गच्छति जानातीति सर्वगः सर्वज्ञः सर्वे गत्यर्थाः ज्ञानार्था इति वचनात् सर्वज्ञत्वाभावे हि यथोचितोपादानकारणाद्यनभिज्ञत्वादनुरूपकार्योत्पत्ति नं स्यात् तथा स स्ववशः स्वतन्त्रः सकलप्राणिनां स्वेच्छया सुखदुःखयोरनुभावनसमर्थत्वात् तथा चोक्तम् ।

ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ।
अन्यो* जन्तु रनीशोऽय मात्मनः सुखदुःखयोः ॥ इति

पारतन्त्र्ये तु तस्य परमुखप्रेक्षितया मुख्यकर्तृत्वव्याघातादनीश्वरत्वापत्तिः तथा स नित्य इति अप्रच्युतानुत्पन्नस्थिरैकरूप स्तस्य ह्यनित्यत्त्वे

---

* मूढो इति २ पु० पाठः ।

परोत्पाद्यतया कृतकत्वप्राप्तिः अपेक्षितपरव्यापारो हि भावः स्वभावनिष्पत्तौ कृतक इत्युच्यते यश्चापर स्तत्कर्ता कल्प्यते स नित्यो ऽनित्यो वा स्या न्नित्यश्चेद- धिकृतेश्वरेण किमपराद्धम् अनित्यश्चे त्तस्याप्युत्पादका- न्तरेण भाव्यं तस्यापि नित्यानित्यत्वकल्पनायाम् अनव- स्थादौस्थमिति तदेवमेकत्वादिविशेषणविशिष्टो भग- वानीश्वरस्त्रिजगत्कर्त्तेति पराभ्युपगममुपदर्श्योत्तरार्द्धेन तस्य दुष्टत्वमाचष्टे इमा एता अनन्तरोक्ताः कुहेवाक- विडम्बनाः कुत्सिता हेवाका आग्रहविशेषाः कुहेवाकाः कदाग्रहा इत्यर्थं स्त एव विडम्बनाः विचारचातुरीबा- ह्यत्वेन तिरस्काररूपत्वाद्विक्षेपप्रकाराः स्यु र्भवेयु- स्तेषां प्रामाणिकापसदानां येषां हे स्वामिन् त्वं ना- नुशासको न शिक्षादाता तदभिनिवेशानां विडम्ब- नारूपत्वज्ञापनार्थमेव पराभिप्रेतपुरुषविशेषणेषु प्र- त्येकं तच्छब्दप्रयोगमसूयागर्भमाविर्भावयांचकार स्तु- तिकारः तथाचैवमेव निन्दनीयं प्रति वक्तारो वदन्ति स मूर्खः स पापीयान् स दरिद्र इत्यादि त्वमित्येक- वचनसंयुक्तयुष्मच्छब्दप्रयोगेण परमेशितुः परमकारु- णिकतया ऽनपेक्षितस्वपरपक्षविभागमद्वितीयं हितो पदेशकत्वं ध्वन्यते अतो ऽत्रायमाशयो यद्यपि भगवान- विशेषेण सकलजगज्जन्तुजातहितावहां सर्वेभ्य एव देशनावाचमाचष्टे तथापि सैव केषांचित् निचित- पापकर्मकलुषितात्मनां रुचिरूपतया न परिणमते अपुनर्बन्धकाद्व्यतिरिक्तत्वे नायोग्यत्वा त्तथा च का-

दस्वर्थं बाणोऽपि बभाण "अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखमुपदेशगुणाः गुरुवचनममलमतिसलिलमिव महदुपजनयति श्रवणस्थितं शूलमभव्यस्ये" ति अतो वस्तुवृत्त्या न तेषां भगवाननुशासक इति न चैतावता जगद्गुरोरसामर्थ्यसम्भावना न हि कालदष्टमनुज्जीवयन् समुज्जीवितेतरदष्टको विषभिषगुपालम्भनीयोऽतिप्रसङ्गात् स हि तेषामेव दोषो न खलु निखिलभुवनाभोगमवभासयन्नोऽपि भानवीया भानवः कौशिकलोकस्यालोकहेतुतामभजमाना उपालम्भसम्भावनास्पदं तथा च श्रीसिद्धसेनः ॥

सद्धर्मबीजवपनानघकौशलस्य यल्लोकबान्धव तवापि खिलान्यभूवन् ॥ तन्नाद्भुतं खगकुलेष्विह तामसेषु सूर्यांशवो मधुकरीचरणावदाताः ॥ १ ॥

अथ कथमिव तत्कुहेवाकानां विडम्बनारूपत्वमिति ब्रूमः यत्तावदुक्तं परैः क्षित्यादयो बुद्धिमत्कर्त्तृकाः कार्यत्वाद्घटवदिति तदयुक्तं व्याप्तेरग्रहणात् साधनं हि सर्वत्र व्याप्तौ प्रमाणेन सिद्धायां साध्यं गमयेदिति सर्ववादिसंवादः स चायं जगन्ति सृजन् सशरीरो ऽशरीरो वा स्यात् सशरीरोऽपि किमस्मदादिवत् दृश्यशरीरविशिष्ट उत पिशाचादिवददृश्यशरीरविशिष्टः प्रथमपक्षे प्रत्यक्षबाध स्तमन्तरेणापि च जायमाने तृणतरुपुरंदरधनुरभ्रादौ कार्यत्वस्य दर्शना त्प्रमेयत्त्वादिवत्साधारणानैकान्तिको हेतुः द्वि-

तीयविकल्पे पुनरदृश्यशरीरत्वे तस्य माहात्म्यविशेषः कारणमाहोस्विदस्मदाद्यदृष्टवैगुण्यं प्रथमप्रकारः कोशपानप्रत्यायनीयः तत्सिद्धौप्रमाणाभावात् इतरेतराश्रयदोषापत्ते श्च सिद्धे हि माहात्म्यविशेषे तस्यादृश्यशरीरत्वं प्रत्येतव्यं तत्सिद्धौ च माहात्म्यविशेषसिद्धिरिति द्वैतीयीकस्तु प्रकारो न संचरत्येव विचारगोचरे संशयानिवृत्तेः किं तस्यासत्वाददृश्यशरीरत्वं वान्ध्येयादिवत् किं वास्मदाद्यदृष्टवैगुण्यात्पिशाचादिवदिति निश्चयाभावात् अशरीरत्वे तदा दृष्टान्तदार्ष्टान्तिकयो वैषम्यं घटादयो हि कार्यरूपाः सशरीरकर्तृका दृष्टाः अशरीरस्य च सत स्तस्य कार्यप्रवृत्तौ कुतः सामर्थ्यमाकाशादिव तस्मात्सशरीराशरीरलक्षणे पक्षद्वयेऽपि कार्यत्वहेतो व्याप्त्यसिद्धिः किं च त्वन्मतेन कालात्ययापदिष्टोऽप्ययं हेतुः धर्म्यैकदेशस्य तरुविद्युदभ्रादेरिदानीमप्युत्पद्यमानस्य विधातुरनुपलभ्यमानत्वेन प्रत्यक्षबाधितधर्म्यनन्तरं हेतुभणनात् तदेवं न कश्चिज् जगतः कर्त्ता एकत्वादीनि तु जगत्कर्तृत्वव्यवस्थापनायानीयमानानि तद्विशेषणानि षण्ढं प्रति कामिन्या रूपसंपत्तिरूपणप्रायाण्येव तथापि तेषां विचारासहत्वख्यापनार्थं किंचिदुच्यते तत्रैकत्ववचस्तावत् बहूनामेककार्यकरणे वैमत्यसंभावनेति नायमेकान्तः अनेककीटिकाशतनिष्पाद्यत्वेपि शक्रमूर्द्धोऽनेकशिल्पिकल्पितत्वेऽपि प्रासादादीनां नैकसरघानिर्वर्त्तितत्वेऽपि मधुच्छत्रादीनां

चैकरूपताया अविगानेनोपलम्भात् अथैतेष्वप्येक एवेश्वरः कर्त्तेति ब्रूषे एवं चेद्भवतो भवानीपतिं प्रति निष्प्रतिभा वासना तर्हि कुविन्दकुम्भकारादितिरस्कारेण पटघटादीनामपिकर्त्ता स एव किं न कल्प्यते अथ तेषां प्रत्यक्षसिद्धं कर्तृत्वं कथमपन्होतुं शक्यं तर्हि कीटिकादिभिः किं तव विराद्धं यत्तेषामसदृशताहृशप्रयाससाध्यं कर्तृत्व मेकहेलयैवापलप्यते तस्माद्बुमत्यभया न्महेशितुरेकत्वकल्पना भोजनादिव्ययभयात्कृपणस्यात्यन्तवल्लभपुत्रकलत्रादिपरित्यजनेन शून्यारण्यानीसेवनमिव तथा सर्वगतत्वमपि तस्य नोपपन्नं तद्धि शरीरात्मना ज्ञानात्मना वा स्यात् प्रथमपक्षे तदीयेनैव देहेन जगत्त्रयस्य व्याप्तत्वादितरनिर्मेयपदार्थानामाश्रयानवकाशः द्वितीयपक्षे तु सिद्धसाध्यतास्माभिरपि निरतिशयज्ञानात्मना परमपुरुषस्य जगत्त्रयक्रोडीकरणाभ्युपगमात् यदि परमेवं भवत्प्रमाणीकृतेन वेदेन विरोधः तत्र हि शरीरात्मना सर्वगतत्वमुक्तं "विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतःपाणि रुतविश्वतःपादि"त्यादिश्रुतेः यच्चोक्तं तस्य प्रतिनियतदेशवर्त्तित्वे त्रिभुवनगतपदार्थानामनियतदेशवृत्तीनां यथावत्निर्माणानुपपत्तिरिति तत्रेदं पृच्छ्यते स जगत्त्रयं निर्मिमाणस्तक्षादिवत्साक्षाद्देहव्यापारेण निर्मिमीते यदि वा सङ्कल्पमात्रेण आद्ये पक्षे एकस्यैव भूभूधरादे र्विधाने अक्षोदीयसः कालक्षेपस्य सम्भवा द्वंहीयसा प्यनेहसा न परिसमाप्तिः द्वितीयपक्षे

तु सङ्कल्पमात्रेणैव कार्यकल्पनायां नियतदेशस्था-यित्वेऽपि न किञ्चिद्दूषणमुत्पश्यामः नियतदेशस्था-यिनां सामान्यदेवानामपि सङ्कल्पमात्रेणैव तत्तत्का-र्यसम्पादनप्रतिपत्तेः किं च तस्य सर्वगतत्वेऽङ्गीक्रिय-माणेऽशुचिषु निरन्तरसन्तमसेषु नरकादिस्थलेष्वपि तस्य हत्तिः प्रसज्यते तथा चानिष्टापत्तिः अथ युष्म-त्पचेऽपि यदा ज्ञानात्मना सर्वजगत्त्रयं व्याप्नोतीत्युच्यते तदा ऽशुचिरसास्वादादीनामप्युपलम्भसम्भावनान्न-रकादिदुःखस्वरूपसम्वेदनात्मकतया दुःखानुभवप्रस-ङ्गा चानिष्टापत्ति स्तुल्यैवेति चेत् तदेतदुपपत्तिभिः प्र-तिकर्त्तुमशक्तस्य धूलिभिरिवावकरणम्। यतो ज्ञानम-प्राप्यकारि स्वस्थलस्थमेव विषयं परिच्छिनत्ति न पुन-स्तत्र गत्वा तत् कुतो भवदुपालम्भः समीचीनः नहि भवतोऽप्यशुचिज्ञानमात्रेण तद्रसास्वादानुभूतिस्तद्भावे हि स्रक्चन्दनाङ्गनारसवत्यादिचिन्तनमात्रेणैव तृप्ति-सिद्धौ तत्प्राप्तिप्रयत्नवैफल्यप्रसक्तिरिति यत्तु ज्ञाना-त्मना सर्वगतत्वे सिद्धसाधनं प्रागुक्तं तच्छक्तिमात्रम-पेक्ष्य मन्तव्यं तथा च वक्तारो भवन्ति अस्य मतिः स-र्वशास्त्रेषु प्रसरति इति न च ज्ञानं प्राप्यकारि तस्या-त्मधर्मत्वेन बहिर्निर्गमाभावाद् बहिर्निर्गमे चात्मनो ऽचैतन्यापत्त्या अजीवत्वप्रसङ्गः न हि धर्मो धर्मिणम-तिरिच्य क्व चन केवलो विलोकितो यत्तु परे दृष्टान्त-यन्ति यथा सूर्यस्य किरणा गुणरूपा अपि सूर्यान्नि-ष्क्रम्य भुवनं भासयन्त्येवं ज्ञानमप्यात्मनः सकाशाद्ब-

हि निर्गत्य प्रमेयं परिच्छिनत्तीति तदेतदुत्तरं किरणानां गुणत्वमसिद्धं तेषां तैजसपुद्गलमयत्वेन द्रव्यत्वात् यश्च तेषां प्रकाशात्मा गुणः स तेभ्यो न जातु पृथग् भवति इति तथा च धर्मसंग्रहिण्यां श्रीहरिभद्राचार्यपादाः।

किरना[१] गुना न दव्वं ताण पत्रासो गुनो न वा दव्वं।
जं नाणं अप्पगुनो कहं अदव्वं स अन्नस्स ॥१॥
गन्तूण[२] न परिच्छिंदइ नाणं नेअं तम्मि देसम्मि।
आहच्चं विअ णवरं अचिंतसत्ती उ विन्नेअं ॥२॥
लोहे[३] वलस्स सत्ती आहच्चं वेअ भिन्नदेसम्मि।
लोहं आकरिसन्ती दीसइ इह कज्ज......... ॥३॥
एअं[४] इह नाणसत्ती आहच्चं वेअ हंदि लोगं तं।
जइ परिछंदइ सव्वं को णु विरोहो हुवइ तस्स ॥४॥

इत्यादि अथ सर्वगः सर्वज्ञ इति व्याख्यानं तत्रापि प्रतिविधीयते ननु तस्य सार्वज्ञ्यं केन प्रमाणेन गृहीतं प्रत्यक्षेण परोक्षेण वा न तावत्प्रत्यक्षेण तस्येन्द्रियार्थसंनिकर्षोत्पन्नतयातीन्द्रियग्रहणासामर्थ्यात् नापि परोक्षेण तद्धि अनुमानं शब्दो वा स्यात् न तावदनुमान-

---

(१) किरणा गुणा न द्रव्यं तेषां प्रकाशो गुणो न वा द्रव्यम्।
यज्ज्ञानमात्मगुणः कथमद्रव्यं तदन्यस्य ॥ १ ॥
(२) गत्वा न परिच्छिनत्ति ज्ञानं ज्ञेयं तस्मिन्देशे।
अत्यर्थमेव केवल मचिन्त्यशक्त्या तु विज्ञेयम् ॥ २ ॥
(३) लोहे वलस्य शक्ति भिन्नदेशे।
लोहमाकर्षन्ती दृश्यत इहकार्यं......... ॥ ३ ॥
(४) एवमिह ज्ञानशक्ति रत्यर्थमेव हन्त लोकतम्।
यदिपरिच्छिनत्ति सर्वं को नु विरोधी भवेत्तस्य ॥ ४ ॥　इतिच्छाया।

न्तस्य लिङ्गग्रहणात् लिङ्गलिङ्गिसम्बन्धस्मरणपूर्वकत्वा न्न च तस्य सर्वज्ञत्वे ऽनुमेये किंचिदव्यभिचारि लिङ्गं पश्याम स्तस्यात्यन्तविप्रकृष्टत्वेन तत्प्रतिबद्धलिङ्गसम्बन्धग्रहणाभावात् अथ तस्य सर्वज्ञत्वं विना जगद्वैचित्र्यमनुपपद्यमानं सर्वज्ञत्वमर्थादापादयतीति चेत् न अविनाभावाभावान्न हि जगद्वैचित्री तत्सार्वज्ञ्यं विना न्यथा नोपपन्ना द्विविधं हि जगत् स्थावरजङ्गमभेदात् तत्र जङ्गमानां वैचित्र्यं स्वोपात्तशुभाशुभकर्मपरिपाकवशेनैव स्थावराणां तु सचेतनानामियमेव गति रचेतनानां तु तदुपभोगयोग्यतासाधनत्वेनानादिकालसिद्धमेव वैचित्र्यमिति नाप्यागम स्तत्साधकः स हि तत्कृतो ऽन्यकृतो वा स्यात् तत्कृत एव चेत् तस्य सर्वज्ञतां साधयति तदा तस्य महत्त्वक्षतिः स्वयमेव स्वगुणोत्कीर्तनस्य महतामनधिकृतत्वात् अन्यच्च तस्य शास्त्रकर्तृत्वमेव न युज्यते शास्त्रं हि वर्णात्मकं ते च तात्वादिव्यापारजन्याः स च शरीर एव सम्भवी शरीराभ्युपगमे च तस्य पूर्वोक्ता एव दोषाः अन्यकृतश्चे त्सोऽन्यः सर्वज्ञो ऽसर्वज्ञो वा सर्वज्ञत्वे तस्य द्वैतापत्त्या प्रागुक्ततदेकत्वाभ्युपगमबाध स्तत्साधकप्रमाणचर्चायामनवस्थापाताच्च असर्वज्ञश्चे त्कस्तस्य वचसि विश्वासः अपरं च भवदभीष्ट आगमः प्रत्युत तत्प्रणेतुरसर्वज्ञत्वमेव साधयति पूर्वापरविरुद्धार्थवचनोपेतत्वा त्तथा हि "न हिंस्या त्सर्वभूतानि" इति प्रथममुक्त्वा पश्चात्तत्रैव पठितम् ॥

षट्शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि।
अश्वमेधस्य वचना न्न्यूनानि पशुभि स्त्रिभिः ॥१॥

तथा "अग्नीषोमीयं पशुमालभेत" "सप्त दशप्राजापत्यान् पशूनालभेते" त्यादिवचनानि कथमिव न पूर्वापरविरोधमनुरुध्यन्ते तथाऽन्टतभाषणं प्रथमं निषिध्य "नान्टतं ब्रूयादि" त्यादिनापश्चाद् "ब्राह्मणार्थे" इत्यादि।

तथा

न नर्म युक्तं वचनं हिनस्ति न
स्त्रीषु राज न्न विवाहकाले।
प्राणात्यये सर्वधनापहारे
पञ्चान्टतान्याहु रपातकानि ॥ १ ॥

तथा अदत्तादानमनेकधा निरस्य पश्चादुक्तं यद्यपि ब्राह्मणो हठेन परकीयमादत्ते बलेन वा तथापि तस्य नादत्तादानं यतः सर्वमिदं ब्राह्मणेभ्यो दत्तं ब्राह्मणानां तु दौर्बल्याद्वृषलाः परिभुञ्जते तस्मादपहरन् ब्राह्मणः स्वमादत्ते स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददातीति "अपुत्रस्य गति र्नास्ति" इति लपित्वा॥

अनेकानि सहस्राणि कुमारब्रह्मचारिणां।
दिवं गतानि विप्राणा मकृत्वा कुलसन्ततिम् ॥१॥

इत्यादि कियन्तो वा दधिमाषभोजनात् कृपणा विवेच्यन्ते तदेवमागमो ऽपि न तस्य सर्वज्ञतां वक्ति किं च सर्वज्ञः सन्नसौ चरा-

परं चेद्विरचयति तदा जगदुपप्लवकरणस्वैरिणः पश्चादपिकर्तव्यनिग्रहान् सुरवैरिण एतदधिक्षेपकारिण श्चास्मदादीन् किमर्थं सृजतीति तन्नार्थं सर्वज्ञः तथा स्ववशत्वं स्वातन्त्र्यं तदपि तस्य न क्षोदक्षमं स हि यदि नाम स्वाधीनः सन् विश्वं विधत्ते परमकारुणिक स्च त्वया वर्ण्यते तत्कथं सुखिदुःखिताद्यवस्थाभेदवृन्दस्थपुटितं घटयति भुवनमेकान्तशर्मसम्पत्कान्तमेव तु किं न निर्मिमीते अथ जन्मान्तरोपार्जिततत्तदीयशुभाशुभकर्मप्रेरितः संस्तथा करोतीति दत्तस्तर्हि स्ववशत्वाय जलाञ्जलिः कर्मजन्ये च त्रिभुवनवैचित्र्येऽपि विशिष्टहेतुकविष्टपसृष्टिकल्पनायाः कष्टैकफलत्वा दस्मन्मतमेवाङ्गीकृतं प्रेक्षावता तथा चायातोऽयं घट्टकुट्यां प्रभातमिति न्यायः किं च प्राणिनां धर्माधर्मावपेक्षमाण स्चेदयं सृजति प्राप्तं तर्हि यदयमपेक्षते त न्न करोतीति न हि कुलालो दण्डादि करोति एवं कर्मापेक्ष स्चेदीश्वरो जगत्कारणं स्या त्तर्हि कर्मणीश्वरत्वमीश्वरोऽनीश्वरः स्यादिति तथा नित्यत्वमपि तस्य स्वगृह एव प्रणिगद्यमानं हृद्यं स खलु नित्यत्वेनैकरूपः सन् त्रिभुवनसर्गस्वभावोऽतत्स्वभावो वा प्रथमविधायां जगन्निर्माणात् कदा चिद पि नोपरमेत् तदुपरमे तत्स्वभावत्वहानिः एवं च सर्गक्रियाया अपर्यवसानादेकस्यापि कार्यस्य न सृष्टिः घटो हि स्वारम्भक्षणा दारभ्य परिसमाप्तेरुपान्त्यक्षणं याव न्निश्चयनयाभिप्रायेण न घटव्यपदेशमासादयति ज-

लाहरणाद्यर्थक्रियायामसाधकतमत्वात् अतत्स्वभाव-
पक्षे तु न जातु जगन्ति सृजेत्तत्स्वभावायोगा द्गगन-
वत् अपि च तस्यैकान्तनित्यस्वरूपत्वे सृष्टिवत्सं-
हारोऽपि न घटते नानारूपकार्यकरणेऽनित्यत्वापत्तेः
स हि येनैव स्वभावेन जगन्ति सृजेत्तेनैव तानि सं-
हरेत् स्वभावान्तरेण वा तेनैव चेत् सृष्टिसंहारयो र्यौ-
गपद्यप्रसङ्गः स्वभावाभेदात् एकस्वभावा त्कारणादने-
कस्वभावकार्योत्पत्तिविरोधात् स्वभावान्तरेण चेन्नि-
त्यत्वहानिः स्वभावभेद एव हि लक्षण मनित्यता-
याः यथा पार्थिवशरीरस्याहारपरमाणुसहकृतस्य
प्रत्यहमपूर्वापूर्वोत्पादेन स्वभावभेदा दनित्यत्वं दृष्ट
श्च भवतां सृष्टिसंहारयोः शम्भौ स्वभावभेदः रजोगुणा-
त्मकतया सृष्टौ तमोगुणात्मकतया संहरणे सात्वि-
कतया च स्थितौ तस्य व्यापारस्वीकारादेवं चावस्था-
भेद स्तद्भेदे चावस्थावतोऽपि भेदा न्नित्यत्वक्षतिः अ-
थास्तु नित्य स्तथापि कथं सततमेव सृष्टौ न चेष्टते
इच्छावशाच्चेन्ननु ता अपीच्छाः स्वसत्तामात्रनिबन्ध-
नात्मलाभाः सदैव किं न प्रवर्तयन्तीति स एवोपा-
लम्भः तथा शम्भो रष्टगुणाधिकरणत्वे कार्यभेदानुमे-
यानां तदिच्छानामपि विषमरूपत्वहानिः केन वार्यते
किं च प्रेक्षावतां प्रवृत्तिः स्वार्थकरुणाभ्यां व्याप्ता तत
श्चायं जगत्सर्गे व्याप्रियते स्वार्था त्कारुण्या द्वा न
तावत् स्वार्था त्तस्य कृतकृत्यत्वात् न च कारुण्या त्प-
रदुःखप्रहाणेच्छा हि कारुण्यं ततः प्राक्सर्गाज्जीवा-

नामिन्द्रियशरीरविषयानुत्पत्तौ दुःखाभावेन कस्य प्रहाणेच्छा कारुण्यं सर्गोत्तरकाले तु दुःखिनोऽवलोक्य कारुण्याभ्युपगमे दुरुत्तरमितरेतराश्रयं कारुण्येन सृष्टिः सृष्ट्या च कारुण्य मिति नास्य जगत्कर्तृत्वं कथमपि सिद्ध्यति तदेव मेवंविधदोषकलुषिते पुरुषविशेषे यस्तेषां सेवाहेवाकः स खलु केवलं बलवन्मोहविडम्बनापरिपाक इति अत्र च यद्यपि मध्यवर्त्तिनो नकारस्य घण्टालालान्यायेन योजनादर्थान्तरमपि स्फुरति यथा इमाः कुहेवाकविडम्बना स्तेषां न स्यु र्येष त्वमनुशासक इति तथा पि सोऽर्थः सहृदयै र्न हृदये धारणीयोऽन्ययोगव्यवच्छेदस्याधिकृतत्वा दिति काव्यार्थः ॥

अथ चैतन्यादयो रूपादयश्च धर्मा आत्मादे र्घटादे श्च धर्मिणोऽत्यन्तं व्यतिरिक्ता अपि समवाय सम्बन्धेन संबद्धाः सन्तो धर्मधर्मिव्यपदेशमश्नुवते तन्मतं दूषयन्नाह ।

**नधर्मधर्मित्वमतीवभेदे**
**वृत्त्यास्ति चे न्न त्रितयं चकास्ति ।**
**इहेद मित्यस्ति मति श्च वृत्तौ**
**न गौणभेदोऽपि च लोकबाधः ॥७॥**

धर्मधर्मिणोरतीवभेदे ऽतीवेत्यत्रेवशब्दो वाक्यालङ्कारे तं च प्रायो ऽतिशब्दा त्किंवृत्ते श्च प्रयुञ्जते

शाब्दिकाः यथा "आवर्जिता किञ्चिदिव स्तनाभ्यां" "उद्धृत्तः क इव सुखावहः परेषा" मित्यादि ततश्च एकान्तभिन्नत्वेऽङ्गीक्रियमाणे धर्मधर्मित्वं न स्या दस्य धर्मिण इमे धर्मा एषां च धर्माणामयमाश्रयभूतो धर्मीत्येवं सर्वप्रसिद्धो धर्मधर्मिव्यपदेशो न प्राप्नोति तयोरत्यन्तभिन्नत्वेऽपि तत्कल्पनायां पदार्थान्तरधर्माणा मपि विवक्षितधर्मधर्मित्वापत्तेः एवमुक्ते सति परः प्रत्यवतिष्टते इत्यास्तीति अयुतसिद्धानामाधार्याधारभूतानामिहप्रत्ययहेतुः संबन्धः समवायः स च समवयना त्समवाय इति द्रव्यगुणकर्मसामान्यविशेषेषु पञ्चसु पदार्थेषु वर्त्तनाद्वृत्ति रिति चाख्यायते तया वृत्त्या समवायसम्बन्धेन तयो धर्मधर्मिणो रितरेतरविनिलुंठितत्वे ऽपि धर्मधर्मिव्यपदेश इष्यते इतिनानन्तरोक्तो दोष इति अत्राचार्यः समाधत्ते चेदिति यद्येवं तव मतिः सा प्रत्यक्षप्रतिक्षिप्ता यतो न त्रितयं चकास्ति अयं धर्मी इमे चास्य धर्मा अयं चैतत्सम्बन्धनिबन्धनं समवाय इत्येतत्त्रितयं वस्तुत्रयं न चकास्ति ज्ञानविषयतया न प्रतिभासते यथा किल शिलाशकलयुगलस्य मिथोऽनुसन्धायकं रालादिद्रव्यं तस्मा त्पृथक् तृतीयतया प्रतिभासते नैव मत्र समवायस्यापि प्रतिभानं किं तु द्वयोरेव धर्मधर्मिणोरिति शपथप्रत्यायनीयोऽयं समवाय इति भावार्थः किं चायं तेन वादिना एको नित्यः सर्वव्यापकोऽमूर्त्तश्च परिकल्प्यते ततो यथा

घटाश्रिताः पाकजरूपादयो धर्माः समवायसंबन्धेन समवेता स्तथा किं न पटेऽपि तस्यैकत्त्वनित्यत्त्वव्यापकत्त्वैः सर्वत्र तुल्यत्त्वात् यथाऽऽकाश एको नित्यो व्यापकश्चामूर्त्तश्च सन् सर्वैः सम्बन्धिभि र्युगपदविशेषेण संबध्यते तथा किं नायमपीति विनश्यदेकवस्तुसमवायाभावे च समस्तवस्तुसमवायाभावः प्रसज्यते तत्तदवच्छेदकभेदा न्नायं दोष इति चेदेव मनित्यत्त्वापत्तिः प्रतिवस्तुस्वभावभेदादिति अथ कथं समवायस्य न ज्ञाने प्रतिभासनं यत स्तस्येहेतिप्रत्ययः सावधानं साधनं इहप्रत्यय श्चानुभवसिद्ध एव इह तन्तुषु पट इहात्मनि ज्ञान मिह घटे रूपादय इति प्रतीतेरुपलम्भात् अस्य च प्रत्ययस्य केवलधर्मधर्म्यनालम्बनत्त्वादस्ति समवायाख्यं पदार्थान्तरं तद्धेतुरिति पराशङ्का मभिसन्धाय पुनराह इहेदमित्यस्ति मतिश्च वृत्ताविति इहेदमिति इहेदमिति आश्रयाश्रयिभावहेतुक इह प्रत्ययो वृत्तावप्यस्ति समवायसंबन्धेऽपि विद्यते चशब्दोऽपिशब्दार्थे स्तस्य च व्यवहितसम्बन्ध स्तथैव च व्याख्यातं इदमत्र हृदयं यथा त्वन्मते पृथिवीत्वाभिसंबन्धा त्पृथ्वी तत्र पृथिवीत्वं पृथिव्या एव स्वरूपमस्तित्त्वाख्यं नापरं वस्त्वन्तरं तेन स्वरूपेणैव समं योऽसावभिसम्बन्धः पृथिव्याः स एव समवाय इत्युच्यते "प्राप्तानामेव प्राप्तिः समवाय" इति वचनात् एवं समवायत्वाभिसम्बन्धा त्समवाय इत्यपि किं न कल्प्यते यत स्तस्यापि य त्समवायत्वं स्वस्वरूपं

तेन सार्द्धं संबन्धोऽस्त्येवान्यथा निःस्वभावत्वात् शशविषाणवदवस्तुत्वमेव भवेत् ततश्च इह समवाये समवायत्वमित्युल्लेखेन इहप्रत्ययः समवायेऽपि युक्त्या घटत एव ततो यथा पृथिव्यां पृथिवीत्वं समवायेन समवेतं समवायेऽपि समवायत्वमेवं समवायान्तरेण संबन्धनीयं तदप्यपरेणेत्येवं दुस्तराऽनवस्था महानदी एवं समवायस्यापि समवायत्वाभिसम्बन्धे युक्त्या उपपादिते साहसिक्यमालम्ब्य पुनः पूर्वपक्षवादी वदति ननु पृथिव्यादीनां पृथिवीत्वाभिसम्बन्धनिबन्धनं समवायो मुख्यस्तत्र त्वतत्त्वादिप्रत्ययाभिव्यङ्ग्यस्य संगृहीतसकलावान्तरजातिलक्षणव्यक्तिभेदस्य सामान्यस्योद्भवादिह तु समवायस्यैकत्वेन व्यक्तिभेदाभावे जातेरनुद्भवत्वाद्गौणोऽयं युष्मत्परिकल्पित इहेतिप्रत्ययसाध्यः समवायत्वाभिसम्बन्धस्तत्साध्यश्च समवाय इति तदेतन्न चेतश्चमत्कारकारणं यतोऽत्रापि जातिरुद्भवन्ती केन निरुध्येत व्यक्तेरभेदेनेति चेन्न तत्तदवच्छेदकवशात्तद्भेदोपपत्तौ व्यक्तिभेदकल्पनाया दुर्निवारत्वादन्यो हि घटसमवायोऽन्यश्च पटसमवाय इति व्यक्त एव समवायस्यापि व्यक्तिभेद इति तत्सिद्धौ सिद्ध एव जात्युद्भवस्तस्मादन्यत्रापि मुख्य एव समवाय इहप्रत्ययस्योभयत्रापि अव्यभिचारात् तदेतत्सकलं सपूर्वपक्षं समाधानं मनसि निधाय सिद्धान्तवादी प्राह न गौणभेद इति गौण इति योऽ

हि कार्यकारणभावात् स्मृतिरित्युभयप्रसिद्धो ऽस्ति दृष्टान्तः।

अथ।

यस्मिन्नेव हि सन्ताने आहिता कर्मवासना।
फलं तत्रैव संधत्ते कर्पासे रक्तता यथा॥

इति कर्पासरक्ततादृष्टान्तो ऽस्तीति चेत्तदसाधीयः साधनदूषणयोरसंभवात् तथा हि अन्वयाद्यसंभवान्न साधनं न हि कार्यकारणभावो यत्र तत्र स्मृतिः कर्पासे रक्ततावदित्यन्वयः संभवति नापि यत्र तत्स्मृतिस्तत्र न कार्यकारणभाव इति व्यतिरेकोऽस्ति असिद्धत्वाद्यनुद्भावनाच्च न दूषणं न हि ततोऽन्यत्वादित्यस्य हेतोः कर्पासे रक्ततावदित्यनेन कश्चिद्दोषः प्रतिपाद्यते किं च यद्यन्यत्वेऽपि कार्यकारणभावेन स्मृतेरुत्पत्तिरिष्यते तदा शिष्याचार्यादिबुद्धीनामपि कार्यकारणभावसद्भावेन स्मृत्यादिः स्यात् अथ नायं प्रसङ्ग एकसंतानत्वे सतीतिविशेषणादिति चेत्तदप्ययुक्तं भेदाभेदपक्षाभ्यां तस्योपक्षीणत्वात् क्षणपरंपरातस्तस्याभेदे हि क्षणपरंपरैव सा तथा च संतान इति न किंचिदतिरिक्तमुक्तं स्यात् भेदे त्वपारमार्थिकः पारमार्थिको वा ऽसौ स्यात् अपारमार्थिकत्वेऽस्य तदेव दूषणमकिंचित्करत्वात् पारमार्थिकत्वे स्थिरो वा स्यात् क्षणिको वा क्षणिकत्वे संताननिर्विशेष एवायमिति किमनेन स्तेमसौतस्य स्तेनान्तरशरणस्वीकरणानुकर-

णिना स्थिरस्यैकात्मनैव संज्ञाभेदतिरोहितः प्रतिपन्न इ-ति न स्मृतिर्घटते क्षणक्षयवादिनां तदभावे चानुमा-नस्यानुत्थानमित्युक्तं प्रागेव अपि च स्मृतेरभावे नि-हितप्रत्युन्मार्गण प्रत्यर्पणादिव्यवहारा विशीर्येरन् ।

> इत्येकनवतेः कल्पे शक्त्या मे पुरुषो हतः ।
> तेन कर्मविपाकेन पादे विद्धोऽस्मि भिक्षवः ॥

इति वचनस्य च का गतिः एवमुत्पत्तिरुत्पाद-यति स्थितिः स्थापयति जरा जर्जरयति विनाशो नाशयति इति चतुःक्षणिकं वस्तु प्रतिजानाना अपि प्रतिक्षेप्याः क्षणचतुष्कानन्तरमपि निहितप्रत्युन्मार्ग-णादिव्यवहाराणां दर्शनात् तदेवमनेकदोषापातेऽपि यः क्षणभङ्गमभिप्रैति तस्य महत् साहसमिति का-व्यार्थः ॥ १८ ॥

अथ तथागताः क्षणक्षयपक्षे सर्वव्यवहारानुपप-त्तिं परैः सद्भाविताभाकर्ण्येत्थं प्रतिपादयिष्यन्ति य-त्सर्वपदार्थानां क्षणिकत्वेऽपि वासनाबललब्धजन्मना ऐक्याध्यवसायेन ऐहिकामुष्मिकव्यवहारप्रवृत्तेः कृ-तप्रणाशादिदोषा निरवकाशा एवेति तदाकूतं प-रिहर्तुकामस्तत्कल्पितवासनायाः क्षणपरंपरातो भे-दाभेदानुभयलक्षणे पक्षत्रयेऽपि अघटमानत्वं दर्शयन् स्वाभिप्रेतभेदाभेदस्याद्वादमकामानपि तानङ्गीका-रयितुमाह ।

## सा वासना सा क्षणसन्ततिश्च

**नाभेदभेदानुभयैर्घटेते।**
**ततस्तटादर्शिशकुन्तपोत-**
**न्यायात्त्वदुक्तानि परे श्रयन्तु ॥१९॥**

सा शाक्यपरिकल्पिता त्रुटितमुक्तावलीकल्पानां परस्परविशकलितानां क्षणानामन्योन्यानुस्यूतप्रत्ययजनिका एकतन्तुस्थानीया सन्तानापरपर्याया वासना वासनेति पूर्वज्ञानजनितामुत्तरज्ञाने शक्तिमाहुः सा च क्षणसन्ततिस्तद्दर्शनप्रसिद्धा प्रदीपकलिकावन्नवनवोत्पद्यमानाऽपरापरसदृशक्षणपरंपरा एते द्वे अपि अभेदभेदानुभयैर्न घटेते न तावदभेदेन तादात्म्येन ते घटेते तयोर्हि अभेदे वासना वा स्यात् क्षणपरंपरा वा न द्वयं यद्धि यस्मादभिन्नं न ततः पृथगुपलभ्यते यथा घटात् घटस्वरूपं केवलायां वासनायामन्वयिस्वीकारः वास्याभावे च किं तया वासनीयमस्तु इति तस्या अपि न स्वरूपमवतिष्ठते क्षणपरंपरामात्राङ्गीकरणे च प्राप्त एव दोषाः न च भेदेन ते युज्येते सा हि भिन्ना वासना क्षणिका स्यादक्षणिका वा क्षणिका चेत्तर्हि क्षणेभ्यस्तस्याः पृथक्कल्पनं व्यर्थम् अक्षणिका चेदन्वयिपदार्थाभ्युपगमेनागमबाधस्तया च पदार्थान्तराणां क्षणिकत्वकल्पनाप्रयासो व्यसनमात्रम् अनुभयपक्षेणापि न घटेते स हि कदाचिदेवं ब्रूयात् नाहं वासनायाः क्षणश्रेणितो ऽभेदं

प्रतिपद्येत न च भेदं किं त्वनुभयमिति तदप्यनुचितं भे-
दाभेदयोर्विधिनिषेधरूपयोरेकतरप्रतिषेधेऽन्यतरस्या-
वश्यं विधिभावादन्यतरपक्षाभ्युपगमस्तत्र च प्रागुक्त ए-
व दोषः अथ वा ऽनुभयरूपत्वे ऽवस्तुत्वप्रसङ्गो भेदाभे-
दलक्षणपक्षद्वयव्यतिरिक्तस्य मार्गान्तरस्यानस्तित्वा-
दनार्हतानां हि वस्तुना भिन्नेन वा भाव्यमभिन्नेन वा
तदुभयातीतस्य बन्ध्यास्तनन्धयप्रायत्वात् एवं विक-
ल्पत्रयेऽपि क्षणपरंपरावासनयोरनुपपत्तौ पारिशेष्या-
द्भेदाभेदपक्ष एव कक्षीकरणीयः न च "प्रत्येकं यो
भवेद्दोषो द्वयोर्भावे कथं न सः" इति वचनादत्रापि
दोषतादवस्थ्यमिति वाच्यं कुक्कुटसर्पनरसिंहादिव-
ज्जात्यन्तरत्वादनेकान्तपक्षस्य नन्वार्हतानां वासना-
क्षणपरंपरयोरङ्गीकार एव नास्ति तत्कथं तदाश्रय-
भेदाभेदचिन्ता चरितार्थी इति चेन्नैवं स्याद्वाद-
वादिनामपि हि प्रतिक्षणं नवनवपर्यायपरंपरोत्प-
त्तिरभिमतैव तथा च क्षणिकत्वम् अतीतानागतवर्त-
मानपर्यायपरंपरानुसन्धायकं चान्वयि द्रव्यं तच्च वा-
सनेतिसंज्ञान्तरभागपि अभिमतमेव न खलु नाम-
भेदाद्भेदः कोऽपि कोविदानां सा च प्रतिक्षणोद्भवि-
ष्णुपर्यायपरंपरान्वयिद्रव्यात्कथं चिद्भिन्ना कथं चि-
दभिन्ना तथा तदपि तस्याः स्याद्भिन्नं स्याद-
भिन्नमिति पृथक्प्रत्ययव्यपदेशविषयत्वाद्भेदो द्र-
व्यस्यैव च तथा तथा परिणमनादभेदः एतच्च
सकलादेशव्याख्याने पुरस्तात्प्रपञ्चयिष्यामः अपि च

बौद्धमते वासनापि तावन्नघटते इति निर्विषया तत्र भेदादिविकल्पचिन्ता तथाहि पूर्वक्षणेनोत्तरक्षणस्य वासना न चास्थिराणां भिन्नकालतयाऽन्योन्यासंबद्धानां च तेषां वास्यवासकभावो युज्यते स्थिरस्य संबद्धस्य च वस्त्रादेर्मृगमदादिना वास्यत्वं दृष्टमिति अथ पूर्वचित्तसहजाच्चेतनाविशेषात्पूर्वं शक्तिविशिष्टं चित्तमुत्पद्यते सोऽस्य शक्तिविशिष्टचित्तोत्पादे वासना तथा हि पूर्वचित्तं रूपादिविषयं प्रवृत्तिविज्ञानं यत्तत्षड्विधं पञ्च रूपादिविज्ञानान्यविकल्पकानि षष्ठं च विकल्पविज्ञानं तेन सह जातः समानकालश्चेतनाविशेषो ऽहंकारास्पदमालयविज्ञानं तस्मात्पूर्वशक्तिविशिष्टचित्तोत्पादो वासनेति तदपि न अस्थिरत्वाद्वासकेनासम्बन्धाच्च यस्मासौ चेतनाविशेषः पूर्वचित्तसहभावी स न वर्तमाने चेतस्युपकारं करोति वर्तमानस्याशक्यापनेयोपनेयत्वेनाकिंकार्यत्वात् तद्धि यथा भूतं जायते तथा भूतं विनश्यति इति नाप्यनागते उपकारं करोति तेनसहासंबद्धत्वात् असंबद्धं च न भावयती युक्तं तस्मात् सौगतमते वासनापि न घटते तत्र च स्तुतिकारेणाभ्युपेत्यापि तामन्वयिद्रव्यस्थापनाय भेदादिचर्चाविरचितेति भावनीयम् अथोत्तरार्धव्याख्या तत इति पक्षत्रयेऽपि दोषसद्भावात्त्वदुक्तानि भवद्वचनानि भेदाभेदस्याद्वादसंवादपूतानि परे कुतीर्थ्याः प्रकरणान्मायातनयाः श्रयन्तु आद्रियन्ताम् अत्रोपमानमाह

तटादर्शीत्यादि तटं न पश्यतीति तटादर्शी यः शकुन्तपोतः पक्षिशावकस्तस्य न्याय उदाहरणं तस्माद्यथा किल कथमप्यपारपारावारान्तःपतितः काकादिशकुनिशावको बहिर्निर्जिगमिषया प्रवहणकूपस्तम्भादेस्तटप्राप्तये मुग्धतयोड्डीनः समंताज्जलैकार्णवमेवावलोकयंस्तटमदृष्ट्वैव निर्वेदाद्व्यावृत्त्य तदेव कूपस्तम्भादिस्थानमाश्रयते गत्यन्तराभावात् एवं तेऽपि कुतीर्थ्याः प्रागुक्तपक्षत्रये ऽपि वस्तुसिद्धिमनासादयन्तस्त्वदुक्तमेव चतुर्थं भेदाभेदपक्षमनिच्छयापि कक्षीकुर्वाणाः त्वच्छासनमेव प्रतिपद्यन्तां नहि स्वस्यबलविकलतामाकलय्य बलीयसः प्रभोः शरणाश्रयणं दोषपोषाय नीतिशालिनां त्वदुक्तानीति बहुवचनं सर्वेषामपि तन्त्रान्तरीयाणां पदे पदेऽनेकान्तवादप्रतिपत्तिरेव यथाऽवस्थितपदार्थप्रतिपादनौपयिका नान्यदिति ज्ञापनार्थम् अनन्तधर्मात्मकस्य वस्तुनः सर्वनयात्मकेन स्याद्वादेन विना यथावद् ग्रहीतुमशक्यत्वात् इतरथाऽन्धगजन्यायेन पल्लवग्राहिताप्रसङ्गात् श्रयन्तीति वर्तमानान्तं केचित्पठन्ति तत्राप्यदोषः अत्र च समुद्रस्थानीयः संसारः पोतसमानं त्वच्छासनं कूपस्तम्भसन्निभः स्याद्वादः पक्षिपोतोपमा वादिनस्ते च स्वाभिमतपक्षस्वरूपेणोड्डयनेन मुक्तिलक्षणतटप्राप्तये कृतप्रयत्ना अपि तस्मादिष्टार्थसिद्धिमपश्यन्तो व्यावृत्य स्याद्वादरूपकूपस्तम्भालंकृततावकीनशासनप्रवहणोपसर्पणमेव यदि शरणीकुर्वते तदा तेषां मनोरथ-

वाद्बहिनि ष्क्रमणमनोरथः सफलतां कलयति नापर-थेति काव्यार्थः अथ वा शकुन्तपोतयोर्न्यायः स इत्य-पि व्याख्यानं स्वधिया भावनीयम् अत्र पोतशब्देन प्र-वहणमुच्यते ॥ १९ ॥

एवं क्रियावादिनां प्रावादुकानां कतिपयकुग्राह-निग्रहं विधाय सांप्रतमक्रियावादिलौकायतिकानां मतं सर्वाधमत्वादन्त उपन्यसन् तन्मतमूलस्य प्रत्यक्ष-प्रमाणस्यानुमानादिप्रमाणान्तरानङ्गीकारे ऽकिञ्चि-त्करत्वप्रदर्शनेन तेषां प्रज्ञायाः प्रमादमादर्शयति ।

विनानुमानेन पराभिसन्धि-
मसंविदानस्य तु नास्तिकस्य ।
न सांप्रतं वक्तुमपि क्व चेष्टा
क्व दृष्टमात्रं च हहा प्रमादः ॥२०॥

प्रत्यक्षमेवैकं प्रमाणमिति मन्यते चार्वाकस्तत्र संनह्यते अनु पश्चाल्लिङ्गलिङ्गिसम्बन्धग्रहणस्मरणान-न्तरं मीयते परिच्छिद्यते देशकालस्वभावविप्रकृष्टो-ऽर्थोऽनेन ज्ञानविशेषेणेत्यनुमानं प्रस्तावात्स्वार्थानुमा-नं तेनानुमानेन लैङ्गिकप्रमाणेन विना पराभिसन्धिं पराभिप्रायम् असंविदानस्य सम्यगजानानस्य तुशब्दः पूर्ववादिभ्यो भेदद्योतनार्थः पूर्वेषां वादिनामास्तिक-तया विप्रतिपत्तिस्थानेषु चोदः कृतो नास्तिकस्य तु वक्तुमपि नौचिती कुत एव तेन सह चोद इति तु-

शब्दार्थः नास्ति परलोकः पुण्यं पापमिति वा मति-रस्य "नास्तिकास्तिकदैष्टिकमि"ति निपातनान्नास्तिक-स्तस्य नास्तिकस्य लौकायितकस्य वक्तुमपि न सांप्रतं वचनमप्युच्चारयितुं नोचितं ततस्तूष्णींभाव एवास्य श्रेयान् दूरे प्रामाणिकपरिषदि प्रविश्य प्रमाणोपन्या-सगोष्ठी वचनं हि परप्रत्यायनाय प्रतिपाद्यते परेण चाप्रतिपित्सितमर्थं प्रतिपादयन्नासौ सतामवधेयव-चनो भवति उन्मत्तवत् ननु कथमिव तूष्णीकतैवास्य श्रेयसी यावता चेष्टाविशेषादिना प्रतिपाद्यस्याभि प्रायमनुमाय सुकरमेवानेन वचनोच्चारणमित्याश-ङ्क्याह क्व चेष्टा क्व दृष्टमात्रं चेति क्वेति बृहदन्तरे चेष्टा-इङ्गितं पराभिप्रायरूपस्यानुमेयस्य लिङ्गं क्व च दृष्ट-मात्रं दर्शनं दृष्टं भावे क्तः दृष्टमेव दृष्टमात्रं प्रत्यक्ष-मात्रं तस्य लिङ्गनिरपेक्षप्रवृत्तित्वादत एव दूरमन्तर-मेतयोः न हि प्रत्यक्षेणातीन्द्रियाः परचेतोवृत्तयः परि-ज्ञातुं शक्यास्तस्यैन्द्रियकत्वात् मुखप्रसादादिचेष्टया तु लिङ्गभूतया पराभिप्रायस्य निश्चयेऽनुमानप्रमाणमनि-च्छतोऽपि तस्य बलादापतितं तथा हि मद्वचनश्रव-णाभिप्रायवानयं पुरुषस्तादृगमुखप्रसादादिचेष्टाऽन्य-थाऽनुपपत्तेरिति अतश्च हहा प्रमादः हहा इति खेदे अहो तस्य प्रमादः प्रमत्तता यदनुभूयमानमप्यनुमानं प्रत्यक्षमात्राङ्गीकारेणापह्नुते अत्र च संपूर्वस्य वेत्ते-रकर्मकत्व एवात्मनेपदम् अत्र तु कर्मास्ति तत्कथम-त्रानश् अत्रोच्यते ऽत्र संवेदितुं शक्तः संविदान इ-

ति कार्यं "वयःशक्तिशील" इति शक्तौ शानद्वि-
धानात् ततश्चायमर्थोऽनुमानेन विना पराभिसंहितं
सम्यग्वेदितुमशक्यस्येति एवं परबुद्धिज्ञानान्यथाऽनुपप-
त्त्याऽयमनुमानं हठादङ्गीकारितस्तथा प्रकारान्तरे-
णाप्ययमङ्गीकारयितव्यस्तथा हि चार्वाकः काश्चि-
त् ज्ञानव्यक्तीः संवादित्वेनाव्यभिचारिणीरुपलभ्या-
न्याश्च विसंवादित्वेन व्यभिचारिणीः पुनः का-
लान्तरे तादृशीतराणां ज्ञानव्यक्तीनामवश्यप्रमा-
णेतरते व्यवस्थापयेत् न च सन्निहितार्थबलेनो-
त्पद्यमानं पूर्वापरपरामर्शशून्यं प्रत्यक्षं पूर्वापरका-
लभाविनीनां ज्ञानव्यक्तीनां प्रामाण्याप्रामाण्यव्य-
वस्थापकं निमित्तमुपलक्षयितुं क्षमते न चायं स्वप्र-
तीतिगोचराणामपि ज्ञानव्यक्तीनां परं प्रति प्रामाण्य-
मप्रामाण्यं वा व्यवस्थापयितुं प्रभवति तस्माद्यथा-
दृष्टज्ञानव्यक्तिसाधर्म्यद्वारेणेदानीन्तनज्ञानव्यक्तीनां
प्रामाण्याप्रामाण्यव्यवस्थापकं परप्रतिपादकं च प्र-
माणान्तरमनुमानरूपमुपासीत परलोकादिनिषेध-
श्च न प्रत्यक्षमात्रेण शक्यः कर्तुं संनिहितमात्रविषय-
त्वात् तस्य परलोकादिकं चाप्रतिषिध्य नायं सुख-
मास्ते प्रमाणान्तरं च नेच्छतीति डिम्भहेवाकः किं
च प्रत्यक्षस्याप्यर्थाव्यभिचारादेव प्रामाण्यं कथमित-
रथा स्नानपानावगाहनाद्यर्थक्रियाऽसमर्थे मरुमरीचि-
कानिचयचुम्बिनि जलज्ञाने न प्रामाण्यं तच्चार्थप्रति-
बद्धलिङ्गशब्दद्वारा समुन्मज्जतोरनुमानागमयोरप्यर्थो

व्यभिचारादेव किं नेष्यते, व्यभिचारिणोरप्यनयोर्दर्शनादप्रामाण्यमिति चेत् प्रत्यक्षस्यापि तिमिरादिदोषान्निशीथिनीनाथयुगलावलम्बिनोऽप्रमाणस्य दर्शनात् सर्वत्राप्रामाण्यप्रसङ्गः प्रत्यक्षाभासं तदिति चेदितरत्रापि तुल्यमेतदन्यत्र पक्षपातात् एवं च प्रत्यक्षमात्रेण वस्तुव्यवस्थाऽनुपपत्तेस्तन्मूला जीवपुण्यापुण्यपरलोकनिषेधादिवादा अप्रमाणमेव एवं नास्तिकाभिमतो भूतचिद्वादोऽपि निराकार्यः तथा च द्रव्यालंकारकारः उपयोगवर्णने न चायं भूतधर्म्मः सत्त्वकठिनत्वादिवन्मद्याङ्गेषु भ्रम्यादिमदशक्तिवद्वा प्रत्येकमनुपलम्भात् अनभिव्यक्ताचात्मसिद्धिः कायाकारपरिणतेभ्यस्तेभ्यः स उत्पद्यत इति चेत्कायपरिणामोऽपि तन्मात्रभावी न कादाचित्कः अन्यस्त्वात्मैव स्यात् अहेतुत्वेन देशादिनियमः क्षतादपि च स्यात् शोणितादुपाधिः सुप्तादावप्यस्ति न च सतस्तस्योत्पत्तिः भूयो भूयः प्रसङ्गात् अलब्धात्मनश्च प्रसिद्धमर्थक्रियाकारित्वं विरुध्यते असतः सकलशक्तिविकलस्य कथमुत्पत्तौ कर्तृत्वमन्यस्यापि प्रसङ्गात् तन्न भूतकार्यमुपयोगः कुतस्तर्हि सुप्तोत्थितस्य तदुदयोऽसंवेदनेन चैतन्यस्याभावात् न जाग्रदवस्थाऽनुभूतस्य स्मरणात् असंवेदनं तु निद्रोपघातात् कथं तर्हि कायविकृतौ चैतन्यविकृति नैकान्ताश्विन्नादिना कमलवपुषोऽपि बुद्धिशुद्धेः अविकारे च भावनाविशेषतः प्रीत्यादिभेददर्शनात् शोकादिना बुद्धिविकृतौ कायविकारादर्शनाच्च परिणामिना

विना च न कार्योत्पत्तिः न च भूतान्येव तथा परिण- मन्ते विजातीयत्वात् काठिन्यादेरनुपलम्भात् अथा- व एव चेन्द्रियग्राह्यत्वरूपां स्थूलतां प्रतिपद्यन्ते त- ज्ज्ञात्यादि चोपलभ्यते तन्न भूतानां धर्म्मः फलं वा उपयोगः तथा भवांश्च यदाक्षिपति तदस्य लक्षणं स चात्मा सुसंविदितः भूतानां तथाभावे बहिर्मुखं स्या- द्गौरोऽहम् इत्यादि तु नान्तर्मुखं वाह्यकरणजन्यत्वात् अनभ्युपगतानुमानप्रमाणस्य चात्मनि निषेधोऽपि दु- र्लभः ।

धर्मः फलं च भूतानामुपयोगो भवेद्यदि ।
प्रत्येकमुपलम्भः स्यादुत्पादो वा विलक्षणात् ॥

इति काव्यार्थः ॥ २० ॥

एवमुक्तयुक्तिभिरेकान्तवादप्रतिक्षेपमाख्याय सां- प्रतमनाद्यविद्यावासनाप्रवासितसम्मतयः प्रत्यक्षो- पलक्ष्यमाणमपि अनेकान्तवादं येऽवमन्यन्ते तेषामु- न्मत्ततामाविर्भावयन्नाह ।

**प्रतिक्षणोत्पादविनाशयोगि-**
**स्थिरैकमध्यक्षमपीक्षमाणः ।**
**जिन त्वदाज्ञामवमन्यते यः**
**स वातकी नाथ पिशाचकी वा ॥२१॥**

प्रतिक्षणं प्रतिसमयम् उत्पादेनोत्तराकारस्वी- काररूपेण विनाशेन च पूर्वाकारपरिहारलक्षणेन यु-

ज्यत इत्येवंशीलं प्रतिक्षणोत्पादविनाशयोगि किं त-त् स्थिरैकं कर्मतापन्नं स्थिरमुत्पादविनाशयोरनुयायि-त्वात् त्रिकालवर्ति यदेकं द्रव्यं स्थिरैकम् एकशब्दोऽत्र साधारणवाची उत्पादे विनाशे च तत्साधारणमन्व-यिद्रव्यत्वात् यथा चैत्रमैत्रयोरेका जननी साधारणी-त्यर्थः इत्थमेव हि तयोरेकाधिकरणतापर्यायाणां क-थंचिदनेकत्वेऽपि तस्य कथंचिदेकत्वात् एवं त्रया-त्मकं वस्तु अध्यक्षमपीक्षमाणः प्रत्यक्षमवलोकयन्नपि हे जिन रागादिजेतृत्वात् त्वदाज्ञामा सामस्त्येनान-न्तधर्मविशिष्टतया ज्ञायन्तेऽवबुध्यन्ते जीवादयः पदार्था यया सा आज्ञा आगमः शासनं तवाज्ञा त्वदाज्ञा तां त्वदाज्ञां भवत्प्रणीतस्याद्वादमुद्रां यः कश्चिदविवेकी अवमन्यतेऽवजानाति जात्यपेक्षमेकवचनमवज्ञया वा स पुरुषपशुर्वातकी पिशाचकी वा वातो रोगविशेषो-ऽस्तीति वातकी वातकीव वातकी वातूल इत्यर्थः एवं पिशाचकीव पिशाचकी भूताविष्ट इत्यर्थः अत्र वाशब्दः समुच्चयार्थः उपमानार्थो वा स पुरुषापसदो वातकि-पिशाचकिभ्यामधिरोहति तुलामित्यर्थः "वातातीसारपिशाचात्कश्चान्त" इत्यनेन मत्वर्थीयः कश्चान्तः एवं पिशाचकीत्यपि यथा किल वातेन पिशाचेन वाऽऽ-क्रान्तवपुर्वस्तुतत्वं साक्षात्कुर्वन्नपि तदावेशवशादन्य-था प्रतिपद्यते एवमयमपि एकान्तवादापस्मारपर-वश इति अत्र च जिनेति साभिप्रायं रागादिजेतृत्वा-द्धि जिनस्ततश्च यः किल विगलितदोषकालुष्यतया-

ऽत्रधेयवचनस्यापि तत्रभवतः शासनमवमन्यते तस्य कथं नोन्मत्ततेति भावः नाथ हे स्वामिन् अलब्धस्य सम्यग्दर्शनादेर्लम्भकतया लब्धस्य च तस्यैव निरतिचारपरिपालनोपदेशदायितया च योगक्षेमकरत्वोपपत्तेर्नाथस्तस्यामन्त्रणं वस्तुतत्त्वं च उत्पादव्ययध्रौव्यात्मकं तथा हि सर्वं वस्तु द्रव्यात्मना नोत्पद्यते विपद्यते वा परिस्फुटमन्वयदर्शनात् लूनपुनर्जातनखादिष्वन्वयदर्शनेन व्यभिचार इति न वाच्यम् प्रमाणेन बाध्यमानस्यान्वयस्यापरिस्फुटत्वात् न च प्रस्तुतोऽन्वयः प्रमाणविरुद्धः स सत्प्रत्यभिज्ञानसिद्धत्वात् सर्वव्यक्तिषु नियतं क्षणेऽक्षणे अन्यत्वमथ वचनविशेषः "सत्योश्चित्यपचित्त्योराकृतिजातिव्यवस्थानात्" इति वचनात्ततो द्रव्यात्मना स्थितिरेव सर्वस्य वस्तुनः पर्यायात्मना तु सर्वं वस्तूत्पद्यते विपद्यते च अस्खलितपर्यायानुभवसद्भावात् न चैवं शुक्ले शङ्खे पीतादिपर्यायानुभवेन व्यभिचारस्तस्य स्खलद्रूपत्वात् न खलु सोऽस्खलद्रूपो येन पूर्वाकारविनाशाऽजहद्वृत्तोत्तराकारोत्पादाविनाभावी भवेत् न च जीवादौ वस्तुनि हर्षामर्षौदासीन्यादिपर्यायपरंपरानुभवः स्खलद्रूपः कस्य चिद्बाधकस्याभावात् ननूत्पादादयः परस्परं भिद्यन्ते न वा यदि भिद्यन्ते कथमेकं वस्तु त्र्यात्मकं न भिद्यते चेत्तथापि कथमेकं त्र्यात्मकं तथा च ।

यद्युत्पादादयो भिन्नाः कथमेकं त्रयात्मकम् ।

अथोत्पादादयोऽभिन्नाः कथमेकं त्रयात्मकम् ॥

इति चेत्तदयुक्तं कथं चिद्भिन्नलक्षणत्वेन तेषां कथं चिद्भेदाभ्युपगमात् तथा ह्युत्पादविनाशध्रौव्याणि स्याद्भिन्नानि भिन्नलक्षणत्वाद्रूपादिवदिति न च भिन्नलक्षणत्वमसिद्धमसत आत्मलाभः सतः सत्तावियोगो द्रव्यरूपतयानुवर्त्तनं च खलूत्पादादीनां परस्परमसंकीर्णानि लक्षणानि सकललोकसाक्षिकाण्येव न चामी भिन्नलक्षणा अपि परस्परानपेक्षाः खपुष्पवदसत्त्वापत्तेः तथा ह्युत्पादः केवलो नास्ति स्थितिविगमरहितत्वात् कूर्मरोमवत् तथा विनाशः केवलो नास्ति स्थित्युत्पत्तिरहितत्वात् तद्वत् एवं स्थितिः केवला नास्ति विनाशोत्पादशून्यत्वात्तद्वदेवेत्यन्योन्यापेक्षाणामुत्पादादीनां वस्तुनि सत्त्वं प्रतिपत्तव्यं तथा चोक्तम् ।

घटमौलिसुवर्णार्थी नाशोत्पादस्थितिष्वयम् ।
शोकप्रमोदमाध्यस्थ्यं जनो याति सहेतुकम् ॥
पयोव्रतो न दध्यत्ति न पयोऽत्ति दधिव्रतः ।
अगोरसव्रतो नोभे तस्माद्वस्तु त्रयात्मकम् ॥

इति काव्यार्थः ॥ २१ ॥

अथान्ययोगव्यवच्छेदस्य प्रस्तुतत्वात् आस्तां तावत्साक्षाद्भवान् भवदीयप्रवचनावयवा अपि परतीर्थिं तिरस्कारबद्धकक्षा इत्याशयवान् स्तुतिकारः सप्रमाणादव्यवस्थापनाय प्रयोगमुपन्यसन् स्तुतिमाह ।

**अनन्तधर्मात्मकमेव तत्त्व-**
**मतोऽन्यथा सत्त्वमसूपपादम् ।**
**इति प्रमाणान्यपि ते कुवादि-**
**कुरङ्गसंत्रासनसिंहनादाः ॥ २१ ॥**

तत्त्वं परमार्थभूतं वस्तु जीवाजीवलक्षणम् अनन्तधर्मात्मकमेव अनन्तास्त्रिकालविषयत्वादपरिमिता ये धर्माः सहभाविनः क्रमभाविनश्च पर्यायास्त एवात्मा स्वरूपं यस्य तदनन्तधर्मात्मकम् एवकारः प्रकारान्तरव्यवच्छेदार्थः अत एवाह अतोऽन्यथेत्यादि अतोऽन्यथा उक्तप्रकारवैपरीत्येन सत्त्वं वस्तुत्वमसूपपादं सुखेनोपपाद्यते घटनाकोटिसंटङ्कमारोप्यते इति सूपपादं न तथा सूपपादं दुर्घटमित्यर्थः अनेन साधनं दर्शितं तथा हि तत्त्वमिति धर्मि अनन्तधर्मात्मकं साध्यो धर्मः सत्त्वान्यथानुपपत्तेरिति हेतुरन्यथानुपपत्त्येकलक्षणत्वाद्धेतोः अन्तर्व्याप्त्यैव साध्यस्य सिद्धत्वाद्द्दृष्टान्तादिभि र्न प्रयोजनं यदनन्तधर्मात्मकं न भवति तत्सदपि न भवति यथा वियदिन्दीवरमिति केवलव्यतिरेकी हेतुः साधर्म्यदृष्टान्तानां पक्षकुक्षिनिक्षिप्तत्वेनान्वयायोगात् अनन्तधर्मात्मकत्वं चात्मनि तावत्साकारानाकारोपयोगिता कर्तृत्वं भोक्तृत्वं प्रदेशाष्टकनिश्चलता अमूर्त्तत्त्वमसंख्यातप्रदेशात्मकता जीवत्वमित्यादयः सहभाविनो धर्माः हर्ष-

विषादशोकसुखदुःखदेवनरनारकतिर्यक्त्वादयस्तु क्रमभाविनो धर्माः सन्ति कायादिष्वप्यसंख्येयप्रदेशात्मकत्वं गत्याद्युपग्रहकारित्वं मत्यादिज्ञानविषयत्वं तत्तदवच्छेदकावच्छेद्यत्वमवस्थितत्वमरूपित्वमेकद्रव्यत्वं निष्क्रियत्वमित्यादयः घटे पुनरामत्वं पाकजरूपादिमत्त्वं पृथुबुध्नोदरत्वं कम्बुग्रीवत्वं जलादिधारणाहरणादिसामर्थ्यं मत्यादिज्ञेयत्वं नवत्वं पुराणत्वमित्यादयः एवं सर्वपदार्थेष्वपि नानानयमताभिज्ञेन शब्दानर्थांश्च पर्यायान् प्रतीत्य वाच्यम् अत्र चात्मशब्देनानन्तेष्वपि धर्मेष्वनुवर्तिरूपमन्वयि द्रव्यं ध्वनितं ततश्चोत्पादव्ययध्रौव्ययुक्तं सदिति व्यवस्थितम् एवं तावदर्थेषु शब्देष्वपि उदात्तानुदात्तस्वरितविवृतसंवृतघोषवदघोषाल्पप्राणमहाप्राणतादयस्तत्तदर्थप्रत्यायनशक्त्यादयश्चावसेयाः असिद्धविरुद्धानैकान्तिकत्वादिकण्टकोद्धारः स्वयमभ्यूह्यः इत्येवमुल्लेखशेषराणि ते तव प्रमाणान्यपि न्यायोपपन्नसाधनवाक्यान्यपि आस्तां तावत्साक्षात्कृतपर्यायनिकायो भवान् यावदेतान्यपि कुवादिकुरङ्गसन्त्रासनसिंहनादाः कुवादिनः कुत्सितवादिन एकांशग्राहकनयानुयायिनोऽन्यतीर्थिकास्त एव संसारवनगहनवसनव्यसनितया कुरङ्गा मृगास्तेषां सम्यक्त्रासने सिंहनादा इव सिंहनादा यथा सिंहस्य नादमात्रमप्याकर्ण्य कुरङ्गास्त्रासमासूत्रयन्ति तथा भवत्प्रणीतैवंप्रकारप्रमाणवचनान्यपि श्रुत्वा कुवादिनस्त्रासमश्नुवते प्रतिवचनप्र-

दानकातरतां बिभ्रतीति यावदेकैकं त्वदुपज्ञं प्रमाणमन्ययोगव्यवच्छेदकमित्यर्थः अत्र प्रमाणानीति बहुवचनम् एवं जातीयानां प्रमाणानां भगवच्छासन आनन्त्यज्ञापनार्थम् एकैकस्य सूत्रस्य सर्वोदधिसलिलसर्वसरिद्वालुकानन्तगुणार्थत्वात् तेषां च सर्वेषामपि सर्वविन्मूलतया प्रमाणत्वादथ वा इतिवचनान्तागणस्य संसूचका भवन्तीति न्यायादितिशब्देन प्रमाणबाहुल्यसूचनात्पूर्वोक्तेऽेकस्मिन्नपि प्रमाणे उपन्यस्ते उचितमेव बहुवचनमिति काव्यार्थः ॥ २२ ॥

अनन्तरमनन्तधर्म्मात्मकत्वं वस्तुनि साध्यं मुकुलितमुक्तं तदेवसप्तभङ्गीप्ररूपणाद्वारेण प्रपञ्चयन् भगवतो निरतिशयं वचनातिशयं स्तुवन्नाह ।

**अपर्ययं वस्तु समस्यमान-**
**मद्रव्यमेतच्च विविच्यमानम् ।**
**आदेशभेदोदितसप्तभङ्ग-**
**मदीदृशस्त्वं बुधरूपवेद्यम् ॥२२॥**

समस्यमानं संक्षेपेणोच्यमानं वस्त्वपर्ययम विवक्षितपर्यायं वसन्ति गुणाः पर्याया अस्मिन्निति वस्तु धर्म्माधर्माकाशपुद्गलकालजीवलक्षणं द्रव्यषट्कम् । अयमभिप्रायः यदैकमेव वस्तु आत्मघटादिकं चेतनाचेतनं सतामपि पर्यायाणामविवक्षया द्रव्यरूपमेव व-

क्तुमिष्यते तदा संक्षेपेणाभ्यन्तरीकृतसकलपर्यायनिकायत्वलक्षणेनाभिधीयमानत्वात् अपर्ययमित्युपदिश्यते केवलद्रव्यरूपमेवेत्यर्थः यथाऽऽत्माऽयं घटोऽयमित्यादिपर्यायाणां द्रव्यानतिरेकात् अत एव द्रव्यास्तिकनयाः शुद्धसंग्रहादयो द्रव्यमात्रमेवेच्छन्ति पर्यायाणां तदविष्वग्भूतत्वात् पर्यवः पर्ययः पर्याय इत्यनर्थान्तरम् अद्रव्यमित्यादि चः पुनरर्थे स च पूर्वस्माद्विशेषद्योतने भिन्नक्रमश्च विविच्यमानं चेति विवेकेन पृथग्रूपतयोच्यमानं पुनरेतद्वस्तु अद्रव्यमेव अविवक्षितान्वयिद्रव्यं केवलपर्यायरूपमित्यर्थः यदाह्यात्मा ज्ञानदर्शनादीन् पर्यायानधिकृत्य प्रतिपर्यायं विचार्यते तदा पर्याया एव प्रतिभासन्ते न पुनरात्माख्यं किमपि द्रव्यम् एवं घटोऽपि कुण्डलोष्ठपृथुबुध्नोदरपूर्वापरादिभागाद्यवयवापेक्षया विविच्यमानः पर्याय एव न पुनर्घटाख्यं तदतिरिक्तं वस्तु अत एव पर्यायास्तिकनयानुपातिनः पठन्ति ।

भागा एव हि भासन्ते संनिविष्टास्तथा तथा ।
तद्वान्नैव पुनः कश्चिन्निर्भागः संप्रतीयते ॥

इति ततश्च द्रव्यपर्यायोभयात्मकत्वेऽपि वस्तुनो द्रव्यनयार्पणया पर्यायनयानर्पणया च द्रव्यरूपता पर्यायनयार्पणया द्रव्यनयानर्पणया च पर्यायरूपता उभयनयार्पणया च तदुभयरूपता अत एवाह वाचकमुख्यः "अर्पितानर्पितसिद्धेरि" ति एवंविधं द्रव्यपर्यायात्मकं वस्तु त्वमेवादीदृशस्त्वमेव दर्शितवान्

नान्य इति काक्वावधारणावगतिः ननु अन्याभिधानप्रत्ययविषयाश्च पर्यायास्तत्कथमेकमेव वस्तूभयात्मकमित्याशङ्कां विशेषणद्वारेण परिहरति आदेशभेदेत्यादि आदेशभेदेन सकलादेशविकलादेशलक्षणेन आदेशद्वयेन उदिताः प्रतिपादिताः सप्तसंख्याः भङ्गा वचनप्रकारा यस्मिन् वस्तुनि तत्तथा ननु यदि भगवता त्रिभुवनबन्धुना निर्विशेषतया सर्वेभ्य एवंविधं वस्तुतत्वमुपदर्शितं तर्हि किमर्थं तीर्थान्तरीयास्तत्र विप्रतिपद्यन्ते इत्याह बुधरूपवेद्यमिति बुध्यन्ते यथावस्थितं वस्तुतत्वं सारेतरविषयविभागविचारणया इति बुधा उत्कृष्टा बुधा बुधरूपा नैसर्गिकाधिगमिकान्यतरसम्यग्दर्शनविशदीकृतज्ञानशालिनः प्राणिनस्तैरेव विदितुं शक्यं वेद्यं परिवेद्युं न पुनः स्वस्वशास्त्रतत्त्वाभ्यासपरिपाकशाणानिशातबुद्धिभिरप्यन्यैस्तेषामनादिमिथ्यादर्शनवासनादूषितमतितया यथावस्थितवस्तुतत्वानवबोधेन बुधरूपत्वाभावात् तथा चागमः।

सदसदविसेसणाउ भवहेउजहच्छिउवलंभाउ।
जाणफलाभावाउ मिच्छिहिट्ठिस्स अन्नाणं ॥१॥

अत एव तत्परिगृहीतं द्वादशाङ्गमपि मिथ्याश्रुतमामनन्ति तेषामुपपत्तिनिरपेक्षं यदृच्छया वस्तुतत्त्वोपलम्भनं संरम्भात् सम्यग्दृष्टिपरिगृहीतं तु मिथ्याश्रुतमपि सम्यक्श्रुततया परिणमते सम्यग्दृशां सर्ववि-

दुपदेशानुसारिप्रवृत्तितया मिथ्याश्रुतोक्तस्याप्यर्थस्य यथावस्थितविधिनिषेधविषयतयोन्नयनात् तथा हि किल वेदे अजैर्यष्टव्यम् इत्यादिवाक्येषु मिथ्यादृशो ऽजशब्दं पशुवाचकंतया व्याचक्षते सम्यग्दृशस्तु जन्मापाय योग्यं त्रिवार्षिकं यवव्रीह्यादि पञ्चवार्षिकं तिलमसूरादि सप्तवार्षिकं कङ्गुसर्षपादि धान्यपर्यायतया पर्यवसाययन्ति अत एव च भगवता श्रीवर्द्धमानस्वामिना विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्यसंज्ञास्तीत्यादिका ऋचः श्रीमदिन्द्रभूत्यादीनां द्रव्यगणधरदेवानां जीवादिनिषेधकतया प्रतिभासमाना अपि तद्व्यवस्थापकतया व्याख्यातास्तथा स्मार्ता अपि ।

न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥

इति श्लोकं पठन्ति अस्य च यथाश्रुतार्थव्याख्याने ऽसंबद्धप्रलाप एव यस्मिन् हि अनुष्ठीयमाने दोषो नास्त्येव तस्मान्निवृत्तिः कथमिव महाफला भविष्यति इज्याध्ययनदानादेरपि निवृत्तिप्रसङ्गात् तस्मादन्यदैदंपर्यमस्य श्लोकस्य तथा हि न मांसभक्षणे कृते ऽदोषो ऽपि तु दोष एवं मद्यमैथुनयोरपि कथं नादोष इत्याह यतः प्रवृत्तिरेषा भूतानां प्रवर्त्तन्त उत्पद्यन्ते ऽस्यामिति प्रवृत्तिरुत्पत्तिस्थानं भूतानां जीवानां तत्तज्जीवसंसक्तिहेतुरित्यर्थः प्रसिद्धं च मांसमद्यमैथु-

नानां जीवसंसक्तिमूलकारणत्वमागमे

आमासु पयक्कासु पविपच्चमाणासु मंसपेसीसु।
आयंतिय मुववाउ भणिउ उनिगोयजीवाणं ॥१॥
मज्जे महुंमि मंसंमि नवणीयंमि वउंच्छ्रए।
उप्पज्जंति अणंता तव्वणातत्थजंतुणो ॥२॥
मेहुणसन्नारूढो नवलारक्कहणेइसुहुमजीवाणं।
केवलिणापन्नतासद्दहियव्वासयाकालं ॥३॥

तथा हि

इच्छीजोणीएसं भवंति वेइंदियाउजेजीवा ॥
इक्कोवदोवतिन्निवलरक्कपुहुतंचउक्कोमं ॥ ४ ॥
पुरिसेण सह गयाए तेसिं जीवाणहोइउद्दवणं।
विणुगदिट्ठ तेणं तत्तापसिलागनाराणं ॥ ५ ॥

संसक्तायां योनौ द्वीन्द्रिया एते शुक्रशोणितसंभवास्तु गर्भजपञ्चेन्द्रिया इमे

पंचिंदियामणुसा रागनरभुत्तनारिगब्भंमि।
उक्कोसंनवलरक्काजायंतीरागहेलाए ॥६॥
नवलरकाणं मज्झे जायइइक्कस्स दुन्हयसम्मती।
सेसापुणरामेव यविलयंवच्चंतितच्छेवा ॥ ७ ॥

तदेवं जीवोपमर्द्दहेतुत्वान्न मांसभक्षणादिकमदुष्टमिति प्रयोगः अथ वा भूतानां पिशाचप्रायाणामेषा प्रवृत्तिस्त एवात्र मांसभक्षणादौ प्रवर्त्तन्ते न पुन र्विवेकिन इति भावः तदेवं मांसभक्षणादेर्दुष्टतां स्पष्टीकृत्य यदुपदेष्टव्यं तदाह निवृत्तिस्तु महाफला

तुरेवकारार्थः तुः स्याद्भेदेऽवधारणे इति वचनात् ततश्चैतेभ्यो मांसभक्षणादिभ्यो निवृत्तिरेव फला स्वर्गापवर्गफलप्रदा न पुनः प्रवृत्तिरपीत्यर्थः अत एव स्थानान्तरे पठितम् ।

वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः ।
मांसानि च न खादेद्यस्तयोस्तुल्यं भवेत्फलम् ॥ १ ॥
एकरात्रोषितस्यापि या गतिर्ब्रह्मचारिणः ।
न सा क्रतुसहस्रेण प्राप्तुं शक्या युधिष्ठिर ॥ १ ॥

मद्यपाने तु कृतं सूत्रानुवादैस्तस्य सर्वविगर्हितत्वात्तानेवंप्रकारानर्थान् कथमिव बुधाभासास्तीर्थिका वेदितुमर्हन्तीति कृतं प्रसङ्गेन अथ कोऽसौ सप्तभङ्गः कश्चायमादेशभेद इत्युच्यते एकत्र जीवादौ वस्तुनि एकैकसत्वादिधर्मविषयप्रश्नवशादविरोधेन प्रत्यक्षादिबाधापरिहारेण पृथग्भूतयोः समुदितयोश्च विधिनिषेधयोः पर्यालोचनया कृत्वा स्याच्छब्दलाञ्छितो वक्ष्यमाणैः सप्तभिः प्रकारैर्वचनविन्यासः सप्तभङ्गीति गीयते तद्यथा स्यादस्त्येव सर्वमिति विधिकल्पनया प्रथमो भङ्गः स्यान्नास्त्येव सर्वमिति निषेधकल्पनया द्वितीयः स्यादस्त्येव स्यान्नास्त्येवेति क्रमतो विधिनिषेधकल्पनया तृतीयः स्यादवक्तव्यमेवेति युगपद्विधिनिषेधकल्पनया चतुर्थः स्यादस्त्येव स्यादवक्तव्यमेवेति विधिकल्पनया युगपद्विधिनिषेधकल्पनया च पञ्चमः स्यान्नास्त्येव स्यादवक्तव्यमेवेति निषेधक-

ल्पनया युगपद्विधिनिषेधकल्पनया च षष्ठः स्यादस्त्येव स्यान्नास्त्येव स्यादवक्तव्यमेवेति क्रमतो विधिनिषेधकल्पनया युगपद्विधिनिषेधकल्पनया च सप्तमः तत्र स्यात्कथंचित्स्वद्रव्यक्षेत्रकालभावरूपेणास्त्येव सर्वं कुम्भादि न पुनः परद्रव्यक्षेत्रकालभावरूपेण तथा हि कुम्भो द्रव्यतः पार्थिवत्वेनास्ति नाबादिरूपत्वेन क्षेत्रतः पाटलिपुत्रकत्वेन न कान्यकुब्जादित्वेन कालतः शिशिरत्वेन न वासन्तिकादित्वेन भावतः श्यामत्वेन न रक्तादित्वेन अन्यथेतररूपापत्त्या स्वरूपहानिप्रसङ्ग इति अवधारणं चात्र भङ्गेऽनभिमतार्थव्यावृत्त्यर्थमुपात्तम् इतरथाऽनभिमततुल्यतैवास्य प्रसज्येत प्रतिनियतस्वार्थानभिधानात्तदुक्तम् ।

वाक्येऽवधारणं तावदनिष्टार्थनिवृत्तये ।
कर्तव्यमन्यथाऽनुक्तसमत्वात्तस्य कुत्र चित् ॥

तथाप्यस्त्येव कुम्भ इत्येतावन्मात्रोपादाने कुम्भस्य स्तम्भाद्यस्तित्वेनापि सर्वप्रकारेणास्तित्वप्राप्तेः प्रतिनियतस्वरूपानुपपत्तिः स्यात् तत्प्रतिपत्तये स्यादिति शब्दः प्रयुज्यते स्यात्कथंचित्स्वद्रव्यादिभिरेवायमस्ति न परद्रव्यादिभिरपीत्यर्थः यत्रापि चासौ न प्रयुज्यते तत्रापि व्यवच्छेदफलैवकारवत् बुद्धिमद्भिः प्रतीयत एव यदुक्तम् ।

सोऽप्रयुक्तोऽपि वा तज्ज्ञैः सर्वत्रार्थात्प्रतीयते ।
यथैवकारो ऽयोगादिव्यवच्छेदप्रयोजनः ॥

इति प्रथमो भङ्गः स्यात्कथंचिन्नास्त्येव कुम्भादिः स्वद्रव्यादिभिरपि वस्तुनोऽसत्वानिष्टौ हि द्रव्यादिभिरिव परप्रतिनियतस्वरूपाभावात् वस्तुप्रतिनियतिनं स्यात् न चास्तित्वैकान्तवादिभिरत्र नास्तित्वमसिद्धमिति वक्तव्यं कथं चित्तस्य वस्तुनि युक्तिसिद्धत्वात्साधनवत् न हि क्वचिदनित्यत्वादौ साध्ये सत्वादिसाधनस्यास्तित्वं विपक्षे नास्तित्वमन्तरेणोपपन्नं तस्य साधनत्वाभावप्रसङ्गात् तस्माद्वस्तुनोऽस्तित्वं नास्तित्वेनाविनाभूतं नास्तित्वं च तेनेति विवक्षावशात्त्वानयोः प्रधानोपसर्जनभावः एवमुत्तरभङ्गेष्वपि ज्ञेय "मर्पितानर्पितसिद्धे"रिति वाचकवचनात् इति द्वितीयः तृतीयः स्पष्ट एव द्वाभ्यामस्तित्वनास्तित्वधर्माभ्यां युगपत्प्रधानतयाऽर्पिताभ्यामेकस्य वस्तुनोऽभिधित्सायां तादृशस्य शब्दस्यासम्भवादवक्तव्यं जीवादिवस्तु तथा हि सदसत्त्वगुणद्वयं युगपदेकत्र सदित्यनेन वक्तुमशक्यं तस्यासत्त्वप्रतिपादनासमर्थत्वात् तथाऽसदित्यनेनापि तस्य सत्त्वप्रत्यायनसामर्थ्याभावात् न च पुष्पदन्तादिवत्साङ्केतिकमेकं पदं तद्वक्तुं समर्थं तस्यापि क्रमेणार्थद्वयप्रत्यायने सामर्थ्योपपत्तेः शतृशानयोः संकेतितसच्छब्दवत् अत एव द्वन्द्वकर्मधारयवृत्त्योर्वाक्यस्य वचनाद्वाचकत्वमिति सकलवाचकरहितत्वादवक्तव्यं वस्तु युगपत्सत्त्वासत्त्वाभ्यां प्रधानभावार्पिताभ्यामाक्रान्तं व्यवतिष्ठते न च सर्वथाऽवक्तव्यमवक्तव्यशब्देनाप्यनभिधेयत्वप्रसङ्गादिति चतुर्थः शेषास्त्रयः

सुगमाभिप्रायाः न च वाच्यम् एकत्र वस्तुनि विधीयमाननिषिध्यमानाऽनन्तधर्माभ्युपगमेनानन्तभङ्गीप्रसङ्गादसङ्गतैव सप्तभङ्गीति विधिनिषेधप्रकारापेक्षया प्रतिपर्यायं वस्तुन्यनन्तानामपि सप्तभङ्गीनामेव सम्भवात् यथा हि सदसत्त्वाभ्यामेवं सामान्यविशेषाभ्यामपि सप्तभङ्ग्येव स्यात् तथा हि स्यात्सामान्यं स्याद्विशेषः स्यादुभयं स्यादवक्तव्यं स्यात्सामान्यावक्तव्यं स्याद्विशेषावक्तव्यं स्यात्सामान्यविशेषावक्तव्यमिति न चात्र विधिनिषेधप्रकारौ न स्त इति वाच्यं सामान्यस्य विधिरूपत्वाद्विशेषस्य च व्यावृत्तिरूपतया निषेधात्मकत्वात् अथ वा प्रतिपक्षशब्दत्वाद्यदा सामान्यस्य प्राधान्यं तदा तस्य विधिरूपता विशेषस्य च निषेधरूपता यदा विशेषस्य पुरस्कारस्तदा तस्य विधिरूपता इतरस्य च निषेधरूपता एवं सर्वत्र योज्यम् अतः सुष्टूक्तम् अनन्ता अपि सप्त भङ्गा एव सम्भवेयुरिति प्रतिपर्यायं प्रतिपाद्यपर्यनुयोगानां सप्तानामेव सम्भवात्तेषामपि सप्तविधतज्जिज्ञासानियमात् तस्या अपि सप्तविधत्वं सप्तधैव तत्संदेहसमुत्पादात् तस्यापि सप्तविधत्वनियमः स्वगोचरवस्तुधर्माणां सप्तविधत्वस्यैवोपपत्तेरिति इयं सप्तभङ्गी प्रतिभङ्गं सकलादेशस्वभावा विकलादेशस्वभावा च तत्र सकलादेशः प्रमाणवाक्यं तल्लक्षणं चेदं प्रमाणप्रतिपन्नानन्तधर्मात्मकवस्तुनः कालादिभिरभेदवृत्तिप्राधान्यादभेदोपचाराद्वा यौगपद्येन प्रतिपा-

इत्कं वचः सकलादेशः अस्यार्थः कालादिभिरष्टभिः कृत्वा यदभेदवृत्तेर्धर्मधर्मिणोरपृथक्भावस्य प्राधान्यं तस्मात्कालादिभि र्भिन्नात्मनामपि धर्मधर्मि णामभेदाध्यारोपाद्वा समकालमभिधायकं वाक्यं सकलादेश स्तद्विपरीतस्तु विकलादेशो नयवाक्यमित्यर्थः अयमाशयः यौगपद्येनाशेषधर्मात्मकं वस्तु कालादिभिरभेदप्रधानवृत्त्याऽभेदोपचारेण वा प्रतिपादयति सकला देशः तस्य प्रमाणाधीनत्वात् विकलादेशस्तु क्रमेण भेदोपचाराद्भेदप्राधान्याद्वा तदभिधत्ते तस्य नयात्मकत्वात्कः पुनः क्रमः किं वा यौगपद्यं यदाऽस्तित्वादिधर्माणां कालादिभिर्भेदविवक्षा तदैकशब्दस्यानेकार्थप्रत्यायने शक्त्यभावात्क्रमः यदा तु तेषामेव धर्माणां कालादिभिरभेदेन वृत्तमात्मरूपमुच्यते तदैकेनापि शब्देनैकधर्मप्रत्यायनमुखेन तदात्मकतामापन्नस्यानेकाशेषधर्मरूपस्य वस्तुनः प्रतिपादनसम्भवाद्यौगपद्यं के पुनः कालादयः कालः १ आत्मरूपम् २ अर्थः ३ संबन्धः ४ उपकारः ५ गुणिदेशः ६ संसर्गः ७ शब्दः ८ इति तत्र स्याज्जीवादिवस्त्वस्त्येवेत्यत्र यत्कालमस्तित्वं तत्कालाशेषानन्तधर्मा वस्तुन्येकत्रेति तेषां कालेनाभेदवृत्तिः १ यदेव चास्तित्वस्य तद्गुणत्वमात्मरूपं तदेवान्यानन्तगुणानामपीति आत्मरूपेणाभेदवृत्तिः २ य एव चाधारोऽर्थो द्रव्याख्यो ऽस्तित्वस्य स एवान्यपर्यायाणामित्यर्थेनाभेदवृत्तिः ३ य एव चाविष्वग्भावः कथं चित्तादात्म्यलक्षणः सम्बन्धोऽस्ति-

त्वस्य स एव शेषविशेषाणामिति सम्बन्धेनाभेदवृत्तिः ४ य एवचोपकारोऽस्तित्वेन स्वानुरक्तत्वकरणं स एवशेषैरपिगुणैरित्युपकारेणाभेदवृत्तिः ५ य एव गुणिनः संबन्धी देशः क्षेत्रलक्षणोऽस्तित्वस्य स एवान्यगुणानामिति गुणिदेशेनाभेदवृत्तिः ६ य एव चैकवस्त्वात्मनाऽस्तित्वस्य संसर्गः स एव शेषधर्माणामिति संसर्गेणाभेदवृत्तिः अविष्वग्भावे ऽभेदः प्रधानं भेदो गौणः संसर्गे तु भेदः प्रधानमभेदो गौण इति विशेषः ७ य एव चास्तीति शब्दो ऽस्तित्त्वधर्मात्मकस्य वस्तुनो वाचकः स एव शेषानन्तधर्मात्मकस्यापीति शब्देनाभेदवृत्तिः ८ पर्यायार्थिकनयगुणभावे द्रव्यार्थिकनयप्राधान्यादुपपद्यते द्रव्यार्थिकगुणभावेन पर्यायार्थिकप्राधान्ये तु न गुणानामभेदवृत्तिः सम्भवति समकालमेकत्र नानागुणानामसम्भवात् सम्भवे वा तदाश्रयस्य तावद्धा भेदप्रसङ्गात् १ नानागुणानां सम्बन्धिन आत्मरूपस्य च भिन्नत्वात् आत्मरूपाभेदे तेषां भेदस्य विरोधात् २ स्वाश्रयस्यार्थस्यापि नानात्वादन्यथा नानागुणाश्रयत्त्वस्य विरोधात् ३ सम्बन्धस्य च सम्बन्धिभेदेन भेददर्शनान्नानासम्बन्धिभिरेकत्रैकसम्बन्धाघटनात् ४ तैः क्रियमाणस्योपकारस्य च प्रतिनियतस्वरूपस्यानेकत्त्वात् अनेकैरुपकारिभिः क्रियमाणस्योपकारस्य विरोधात् ५ गुणिदेशस्य प्रतिगुणं भेदात्तदभेदे भिन्नार्थगुणानामपि गुणिदेशाभेदप्रसङ्गात् ६ संसर्गस्य च प्रतिसंसर्गिभेदात्तदभे-

दे संसर्गिभेदविरोधात् ७ शब्दस्य प्रतिविषयं नानात्वात्सर्वगुणानामेकशब्दवाच्यतायां सर्वार्थानामेकशब्दवाच्यतापत्तेः शब्दान्तरवैफल्यापत्तेः ८ तत्त्वतोऽस्तित्वादीनाम् एकत्र वस्तुन्येवमभेदवृत्तेरसम्भवे कालादिभिर्भिन्नात्मनाम् अभेदोपचारः क्रियते तदेताभ्याम् अभेदवृत्त्यभेदोपचाराभ्यां कृत्वा प्रमाणप्रतिपन्नाऽनन्तधर्मात्मकस्य वस्तुनः समसमयं यदभिधायकं वाक्यं स सकलादेशः प्रमाणवाक्यापरपर्यायः नयविषयीकृतस्य वस्तुधर्मस्य भेदवृत्तिप्राधान्याद् भेदोपचाराद्वा क्रमेण यदभिधायकं वाक्यं स विकलादेशो नयवाक्यापरपर्याय इति स्थितं ततः साधूक्तमादेशभेदोदितसप्तभङ्गमिति काव्यार्थः ॥ २३ ॥

अनन्तरं भगवद्दर्शितस्यानेकात्मनो वस्तुनो बुधरूपवेद्यत्वमुक्तम् अनेकान्तात्मकत्वं च सप्तभङ्गीप्ररूपणेन सुखोन्नेयं स्यादिति सापि निरूपिता तस्यां च विरुद्धधर्माध्यासितं वस्तु पश्यन्त एकान्तवादिनो बुधरूपा विरोधमुद्भावयन्ति तेषां प्रमाणमार्गाच्च्यवनमाह ।

उपाधिभेदोपहितं विरुद्धं
नार्थेष्वसत्त्वं सदवाच्यते च ।
इत्यप्रबुद्ध्यैव विरोधभीता
जडास्तदेकान्तहताः पतन्ति ॥ २४ ॥

अर्थेषु पदार्थेषु चेतनाचेतनेष्वसत्त्वं न विरुद्धम् अस्तित्वेन सह विरोधं नानुभवतीत्यर्थः न केवलमसत्त्वं न विरोधावरुद्धं किं तु सद्वाच्यते सच्चावाच्यं च सद्वाच्ये तयोर्भावो सद्वाच्यते अस्तित्वावक्तव्यत्वे इत्यर्थः ते अपि न विरुद्धे तथाहि अस्तित्वं नास्तित्वेन सह न विरुध्यते अवक्तव्यत्वमपि विधिनिषेधात्मकमन्योन्यं न विरुध्यते अथ च अवक्तव्यत्वं वक्तव्यत्वेन साकं न विरोधमुद्वहति अनेन च नास्तित्वास्तित्वावक्तव्यत्वलक्षणभङ्गत्रयेण सकलसप्तभङ्ग्या निर्विरोधता उपलक्षिता अमीषां त्रयाणां मुख्यत्वाच्छेषभङ्गानां च संयोगजत्वेनामीष्वेवान्तर्भावादिति नन्वेते धर्माः परस्परं विरुद्धाः तत्कथमेकत्र वस्तुन्येषां समावेशः संभवति इति विशेषणद्वारेण हेतुमाह उपाधिभेदोपहितमिति उपाधयोऽवच्छेदका अंशप्रकारास्तेषां भेदो नानात्वं तेनोपहितमर्पितम् असत्त्वस्य विशेषणमेतत् उपाधिभेदोपहितं सदर्थेष्वसत्त्वं न विरुद्धं सद्वाच्यतयोश्च वचनभेदं कृत्वा योजनीयम् उपाधिभेदोपहिते सती सद्वाच्यते अपि न विरुद्धे अयमभिप्रायः परस्परपरिहारेण ये वर्तेते तयोः शीतोष्णवत्सहानवस्थानलक्षणो विरोधो न चात्रैवं सत्त्वासत्त्वयोरितरेतरमविष्वग्भावेन वर्तनात् न हि घटादौ सत्त्वमसत्त्वं परिहृत्य वर्तते पररूपेणापि सत्त्वप्रसङ्गात् तथा च तद्व्यतिरिक्तार्थान्तराणां नैरर्थक्यं तेनैव त्रिभुवनसाध्यार्थक्रियाणां सिद्धेर्न चासत्त्वं

सत्त्वं परिहृत्य वर्तते स्वरूपेणाप्यसत्त्वप्राप्तेस्तथा च निरुपाख्यत्वात्सर्वशून्यतेति तदा हि विरोधः स्याद्यद्येकोपाधिकं सत्त्वमसत्त्वं च स्यात् न चैवं यतो न हि येनैवांशेन सत्त्वं तेनैवासत्त्वमपि किं त्वन्योपाधिकं सत्त्वमन्योपाधिकं पुनरसत्त्वं स्वरूपेण हि सत्त्वं पररूपेण चासत्त्वं दृष्टं हि एकस्मिन्नेव चित्रपटावयविनि अन्योपाधिकं तु नीलत्वमन्योपाधिकाश्चेतरेवर्णाः नीलत्वं हि नीलीरागाद्युपाधिकं वर्णान्तराणि च तत्तद्रञ्जनद्रव्योपाधिकानि एवं मेचकरत्नेऽपि तत्तद्वर्णपुद्गलोपाधिकं वैचित्र्यमवसेयं न चैभिर्दृष्टान्तैः सत्त्वासत्त्वयोर्भिन्नदेशत्वप्राप्तिश्चित्रपटाद्यवयविन एकत्वात्तत्रापि भिन्नदेशत्वासिद्धेः कथंचित्पक्षस्तु दृष्टान्ते दार्ष्टान्तिके च स्याद्वादिनां न दुर्लभः एवमप्यपरितोषश्चेदायुष्मतस्तर्ह्येकस्यैव पुंसस्तत्तदुपाधिभेदात्पितृत्वपुत्रत्वमातुलत्वभागिनेयत्वपितृव्यत्वभ्रातृव्यत्वादिधर्माणां परस्परविरुद्धानामपि प्रसिद्धिदर्शनात् किं वाच्यम् एवमवक्तव्यत्वादयोऽपि वाच्याः इत्युक्तप्रकारेण उपाधिभेदेन वास्तवं विरोधाभावमप्रबुद्ध्यैवाज्ञात्वैव एवकारोऽवधारणे स च तेषां सम्यग्ज्ञानस्याभाव एव न पुनर्लेशतोऽपि भाव इति व्यनक्ति ततस्ते विरोधभीताः सत्त्वासत्त्वादिधर्माणां बहिर्मुखशेमुष्या संभावितो यो विरोधः सहानवस्थानादिस्तस्माद्भीतास्त्रस्तमानसा अत एव जडास्तात्त्विकभयहेतोरभावेऽपि तथाविधपशुवद्भीतत्वान्मूर्खाः परवादिनस्तदेकान्त-

हतास्तेषां सत्त्वादिधर्माणां य एकान्त इतरधर्म-निषेधनेन स्वाभिप्रेतधर्मव्यवस्थापननिश्चयस्तेन हता इव हताः पतन्ति स्खलन्ति पतिताश्च सन्तस्ते ऽन्याय्यमार्गाक्रमणेनासमर्था न्यायमार्गाध्वनीनानां च सर्वेषामप्याक्रमणीयतां यान्तीति भावः यद्वा पतन्तीति प्रमाणमार्गतश्च्यवन्ते लोके हि सन्मार्गच्युतः पतित इति परिभाष्यते अथ वा यथा वज्रादिप्रहारेण हतः पतितो मूर्छामतुच्छामासाद्य निरुद्धवाक्प्रसरो भवति एवं तेऽपि वादिनः स्वाभिमतैकान्तवादेन युक्तिसरणिमननुसरन्तो वज्राशनिप्रायेण निहताः सन्तः स्याद्वादिनां पुरतोऽकिंचित्करा वाङ्मात्रमपि नोच्चारयितुमीशत इति अत्र च विरोधस्योपलक्षणात्वाद्वैयधिकरण्यमनवस्था संकरो व्यतिकरः संशयो प्रतिपत्तिर्विषयव्यवस्थाहानिरित्येतेऽपि परोद्भाविता दोषा अभ्यूह्यास्तथाहि सामान्यविशेषात्मकं वस्त्वित्युपन्यस्ते परे उपालब्धारो भवन्ति यथा सामान्यविशेषयोर्विधिप्रतिषेधरूपयोरेकत्राभिन्ने वस्तुन्यसंभवाच्छीतोष्णवदिति विरोधः न हि यदेव विधेरधिकरणं तदेव प्रतिषेधस्याधिकरणं भवितुमर्हति द्वाभ्यां वा स्वभावाभ्याम् एकेनैव चेत्तत्र पूर्ववद्विरोधः द्वाभ्यां वा स्वभावाभ्यां सामान्यविशेषाख्यं स्वभावद्वयमधिकरोति तदाऽनवस्था तावपि स्वभावान्तराभ्यां तावपि स्वभावान्तराभ्यामिति येनात्मना सामान्यस्याधिकरणं तेन सामान्यस्य विशेषस्य च येनच विशेषस्या-

धिकरणं तेन विशेषस्य सामान्यस्य चेति संकरदोषः येन स्वभावेन सामान्यं तेन विशेषो येन विशेषस्तेन सामान्यमिति व्यतिकरः ततश्च वस्तुनोऽसाधारणाकारेण निश्चेतुमशक्तेः संशयः ततश्चाप्रतिपत्तिः ततश्च प्रमाणविषयव्यवस्थाहानिरिति एते च दोषाः स्याद्वादस्य जात्यन्तरत्वान्निरवकाशा एवात:स्याद्वादमर्मवेदिभिरुद्धरणीयास्तत्तदुपपत्तिभिरिति स्वतन्त्रयो निंरपेक्षयोरेव सामान्यविशेषयोर्विधिरूपयोस्तेषामवकाशात् अथ वा विरोधशब्दोऽत्रदोषवाची यथा विरुद्धमाचरतीति दुष्टमित्यर्थः ततश्च विरोधिभ्यः विरोधवैयधिकरण्यादिदोषेभ्यो भीता इति व्याख्येयम् एवं च सामान्यशब्देन सर्वे अपि दोषव्यक्तयः संगृहीता भवन्तीति काव्यार्थः ॥ २३ ॥

अथानेकान्तवादस्य सर्वद्रव्यपर्यायव्यापित्वेऽपि मूलभेदापेक्षया चातुर्विध्याभिधानद्वारेण भगवतस्तत्त्वामृतरसास्वादसौहित्यमुपवर्णयन्नाह ।

स्यान्नाशि नित्यं सदृशं विरूपं
वाच्यं न वाच्यं सदसत्तदेव ।
विपश्चितां नाथ निपीततत्त्व-
सुधोद्गतोद्गारपरंपरेयम् ॥२५॥

स्यादित्यव्ययमनेकान्तद्योतकम् अष्टास्वपि पदेषु

योऽयं तदेवाधिकृतमेवैकं वस्तु स्यात्कथं चिन्नाशि न-
शनशीलमनित्यमित्यर्थः स्यान्नित्यमविनाशधर्म्मीत्यर्थः
एतावता नित्यानित्यलक्षणमेकं विधानं तथा स्यात्स-
दृशम् अनुवृत्तिहेतुसामान्यरूपं स्याद्विरूपं विविधरूपं
विसदृशपरिणामात्मकं व्यावृत्तिहेतुविशेषरूपमित्यर्थः
अनेन सामान्यविशेषरूपो द्वितीयः प्रकारः तथा
स्याद्वाच्यं वक्तव्यं स्यान्न वाच्यमवक्तव्यमित्यर्थः अत्र च
समासेऽवाच्यमिति युक्तं तथाप्यवाच्यपदं योन्यादौ
रूढमित्यसभ्यतापरिहारार्थं न वाच्यमित्यसमस्तं च-
कार स्तुतिकारः एतेन अभिलाप्यानभिलाप्यस्वरूप-
स्तृतीयो भेदः तथा स्यात्सद् विद्यमानं अस्तिरूपमि-
त्यर्थः स्यादसत्तद्विलक्षणमित्यनेन सदाख्या चतुर्थी वि-
धा हे विपश्चितां नाथ संख्यावतां मुख्य इयमनन्त-
रोक्तनिपीततत्त्वसुधोद्गतोद्गारपरम्परा तवेति प्रक-
रणात्सामर्थ्याद्वा गम्यते तत्त्वं यथावस्थितवस्तुस्वरूप-
परिच्छेदस्तदेव जरामरणापहारित्वाद्विबुधोपभोग्य-
त्वान्मिथ्यात्वविषोर्म्मिनिराकरिष्णुत्वादान्तराह्लाद-
कारित्वाच्च पीयूषं तत्त्वसुधा नितरामनन्यतया पी-
ता आस्वादिता या तत्त्वसुधा तस्या उद्गता प्रा-
दुर्भूता तत्कारणिका या उद्गारपरम्परा उद्गारश्रे-
णिरिवेत्यर्थः यथा हि कश्चिदाकण्ठं पीयूषरसमापीय
तदनुविधायिनीमुद्गारपरम्परां मुञ्चति तथा भगवा-
नपि जरामरणापहारितत्त्वामृतं स्वैरमास्वाद्य तद्र-
सानुविधायिनीं प्रस्तुतानेकान्तवादभेदचतुष्टयीलक्षणा-

मुद्गारपरम्परां देशनामुखेनोद्गीर्णवानित्याशयः अथ वा यैरेकान्तवादिभिर्मिथ्यात्वगरलभोजनमात्मनि भक्षितं तेषां तत्तद्वचनयुक्ता उद्गारप्रकाराः प्राक्प्रदर्शिता यैस्तु पचेलिमप्राचीनपुण्यप्राग्भारानुगृहीतैर्जगद्गुरुवदनेन्दुनिःस्यन्दितत्वामृतं मनोहत्य पीतं तेषां विपश्चितां यथार्थवादविदुषां हे नाथ इयं पूर्वदलदर्शितोल्लेखशेखरा उद्गारपरम्परेति व्याख्येयम् एते चत्वारोऽपि वादास्तेषु स्थानेषु प्रागेव चर्चितास्तथा हि आदीपमाव्योमेति वृत्ते नित्यानित्यवादः अनेकमेकात्मकमिति काव्ये सामान्यविशेषवादः सप्तभङ्गयामभिलाप्यानभिलाप्यवादः सदसद्वादश्च इति न भूयः प्रयास इति काव्यार्थः ॥ २५ ॥

इदानीं नित्यानित्यपक्षयोः परस्परदूषणप्रकाशनबद्धलक्षणतया वैरायमाणयोरितरेतरोदीरितविविधहेतुहेतिसंनिपातसंजातविनिपातयोरयत्नसिद्धप्रतिपक्षप्रतिक्षेपस्य भगवच्छासनसाम्राज्यस्य सर्वोत्कर्षमाह ।

य एव दोषाः किल नित्यवादे
विनाशवादेऽपि समास्त एव ।
परस्परध्वंसिषु कण्टकेषु
जयत्यधृष्यं जिनशासनं ते ॥२६॥

किलेति निश्चये य एव नित्यवादे नित्यैकान्त-

वादे दोषाः अनित्यैकान्तवादिभिः प्रसञ्जिताः क्रम-
यौगपद्याभ्याम् अर्थक्रियानुपपत्त्यादयस्त एव विनाश-
वादेऽपि क्षणिकैकान्तवादेऽपि समास्तुल्या नित्यैका-
न्तवादिभिः प्रसज्यमाना अन्यूनाधिकास्तथा हि नि-
त्यवादी प्रमाणयति सर्वं नित्यं सत्त्वात् क्षणिके स-
दसत्कालयोरर्थक्रियाविरोधात्तल्लक्षणं सत्त्वं नावस्थां
बध्नातीति ततो निवर्त्तमानमनन्यशरणतया नित्यत्वे-
ऽवतिष्ठते तथा हि क्षणिकोऽर्थः सन्वा कार्यं कुर्या-
दसन्वा गत्यन्तराभावात् न तावदाद्यः पक्षः समस-
मयवर्त्तिनि व्यापारयोगात् सकलभावानां परस्परं
कार्यकारणभावप्राप्त्याऽतिप्रसङ्गाच्च नापि द्वितीयः पक्षः
क्षोदं क्षमते असतः कार्यकरणशक्तिविकलत्वादन्य-
था शशविषाणादयोऽपि कार्यकारणयोगात्स्युरन् वि-
शेषाभावादिति अनित्यवादी नित्यत्ववादिनं प्रति पु-
नरेवं प्रमाणयति सर्वं क्षणिकं सत्त्वादक्षणिके क्रम-
यौगपद्याभ्यामर्थक्रियाविरोधात् अर्थक्रियाकारित्वस्य
च भावलक्षणत्वात् ततोऽर्थक्रियाव्यावर्त्तमाना स्व-
क्रोडीकृतां सत्तां व्यावर्त्तयेदिति क्षणिकसिद्धिः न हि
नित्योऽर्थोऽर्थक्रियां क्रमेण प्रवर्त्तयितुमुत्सहते पूर्वार्थ-
क्रियाकरणस्वभावोपमर्दद्वारेणोत्तरक्रियाया क्रमेण
प्रवृत्तेरन्यथा पूर्वक्रियाकरणाविरामप्रसङ्गात् तत्स्वभा-
वप्रच्यवे च नित्यता प्रयाति अतादवस्थ्यस्यानित्यता-
लक्षणत्वात् अथ नित्योऽपि क्रमवर्त्तिनं सहकारिका-
रणमर्थमुदीक्षमाणस्तावदासीत पश्चात्तमासाद्य क्र-

मेण कार्यं कुर्यादिति चेन्न सहकारिकारणस्य नित्ये ऽकिंचित्करत्वात् अकिञ्चित्करस्यापि प्रतीक्षणेऽनवस्थाप्रसङ्गात् नापि यौगपद्येन नित्योऽर्थोऽर्थक्रियां कुरुते अध्यक्षविरोधात् न ह्येककालं सकलाः क्रियाः प्रारभमाणः कश्चिदुपलभ्यते करोतु वा तथाप्याद्यक्षण एव सकलक्रियापरिसमाप्तेर्द्वितीयादिक्षणेष्वकुर्वाणस्यानित्यता बलादाढौकते करणाकरणयोरेकस्मिन्विरोधात् इति तदेवमेकान्तद्वयेऽपि ये हेतवस्ते युक्तिसाम्याद्विरुद्धं न व्यभिचरन्तीत्यविचारितरमणीयतया मुग्धजनसाध्यं चोत्पादयन्तीति विरुद्धा व्यभिचारिणोऽनैकान्तिका इति अत्र च नित्यानित्यैकान्तपक्षप्रतिक्षेप एवोक्तः उपलक्षणत्वाच्च सामान्यविशेषाद्येकान्तवादा अपि मिथस्तुल्यदोषतया विरोधाव्यभिचारिण एव हेतूनुपस्पृशन्तीति परिभावनीयम् अथोत्तरार्द्धं व्याख्यायते परस्परेत्यादि एवं च कण्टकेषु क्षुद्रशत्रुषु एकान्तवादिषु परस्परध्वंसिषु सत्सु परस्परस्मात् ध्वंसन्ते विनाशमुपयान्तीत्येवं शीलाः सुन्दोपसुन्दवदिति परस्परध्वंसिनस्तेषु हे जिन ते तव शासनं स्याद्वादप्ररूपणानिपुणं द्वादशाङ्गीरूपं प्रवचनं पराभिभावुकानां कण्टकानां स्वयमुच्छिन्नत्वेनैवाभावादधृष्यम् अपराभवनीयं "शक्तार्हे कृत्याश्चे"ति कृत्यविधानाद्धर्षितुमशक्यं धर्षितुमनर्हं वा जयति सर्वोत्कर्षेण वर्तते यथा कश्चिन्महाराजः पीवरपुण्यपरीपाकः परस्परं विगृह्य स्वयमेव क्षयमुपेयिवत्सु द्विषत्सु अय-

त्वसिद्धनिष्कण्टकत्वं समृद्धं राज्यमुपभुञ्जानः सर्वोत्कृष्टो भवत्येवं त्वच्छासनमपीति काव्यार्थः ॥ २६ ॥

अनन्तरकाव्ये नित्यानित्याद्येकान्तवाददोषसामान्यमभिहितमिदानीं कतिपयतद्विशेषान्नामग्राहं दर्शयंस्तत्प्ररूपकाणामसद्भूतोद्भावकतयोद्धततथाविधरिपुजनजनितोपद्रवमिव परित्रातुर्धर्मरक्षीपतेस्त्रिजगत्पतेः पुरतो भुवनत्रयं प्रत्युपकारकारितामाविष्करोति ।

नैकान्तवादे सुखदुःखभोगौ
न पुण्यपापे न च बन्धमोक्षौ ।
दुर्नीतिवादव्यसनासिनैवं
परैर्विलुप्तं जगदप्यशेषम् ॥२७॥

एकान्तवादे नित्यानित्यैकान्तपक्षाभ्युपगमे न सुखदुःखभोगौ घटेते न च पुण्यपापे घटेते न च बन्धमोक्षौ घटेते पुनःपुनर्नञः प्रयोगोऽत्यन्ताघटमानतादर्शनार्थः तथाह्येकान्तनित्ये आत्मनि तावत् सुखदुःखभोगौ नोपपद्येते नित्यस्य हि लक्षणं अप्रच्युतानुत्पन्नस्थिरैकरूपत्वं ततो यदात्मा सुखमनुभूय स्वकारणकलापसामग्रीवशात् दुःखमुपभुङ्क्ते तदा स्वभावभेदादनित्यत्वापत्त्या स्थिरैकरूपताहानिप्रसङ्गः एवं दुःखमनुभूय सुखमुपभुञ्जानस्यापि वक्तव्यम् अथावस्थाभेदादयं व्यवहारो न चावस्थासु भिद्यमानास्वपि

तद्वतो भेदाः सर्पस्येव कुण्डलार्जवाद्यवस्थास्विति चेन्न-नु तास्ततो व्यतिरिक्ता अव्यतिरिक्ता वा व्यति-रेके तास्तस्येति संबन्धाभावो ऽतिप्रसङ्गात् अव्यति-रेके तु तद्वानेवेति तदवस्थितैव स्थिरैकरूपताहानिः कथं च तदेकान्तैकरूपत्वेऽवस्थाभेदोऽपि भवेदि-ति किं च सुखदुःखभोगौ पुण्यपापनिर्वर्त्यौ त-न्निर्वर्तनं चार्थक्रिया सा च कूटस्थनित्यस्य क्रमे-णाक्रमेण वा नोपपद्यत इत्युक्तप्रायमत एवोक्तं न पुण्यपापे इति पुण्यं दानादिक्रियोपार्जनीयं शु-भं कर्म पापं हिंसादिक्रियासाध्यमशुभं कर्म ते अ-पि न घटेते प्रागुक्तनीतेः तथा न बन्धमोक्षौ बन्धः कर्मपुद्गलैः सह प्रतिप्रदेशमात्मनो वन्ह्ययःपिण्डव-दन्योन्यसंश्लेषः मोक्षः कृत्स्नकर्मक्षयस्तावप्येकान्त-नित्ये न स्यातां बन्धो हि संयोगविशेषः स चाप्राप्तानां प्राप्तिरितिलक्षणः प्राक्कालभाविनी अप्राप्तिरन्यावस्था उत्तरकालभाविनी प्राप्तिरन्या तदनयोरप्यवस्थाभेद-दोषो दुस्तरः कथं चैकरूपत्वे सति तस्याकस्मिको ब-न्धनसंयोगः बन्धनसंयोगाच्च प्राक्किं नायं मुक्तो ऽभवत् किं च तेन बन्धनेनासौ विकृतिमनुभवति न वा अ-नुभवति चेच्चर्मादिवदनित्यः नानुभवति चेन्निर्विका-रत्वे सता वा तेन गगनस्येव न कोऽप्यस्य विशेष इति बन्धवैफल्यान्नित्यं मुक्त एव स्यात्ततश्च विशीर्णा जगति बन्धमोक्षव्यवस्था तथा च पठन्ति ।

वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम् ।

चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्फलः ।

बन्धानुपपत्तौ मोक्षस्याप्यनुपपत्तिः बन्धनविच्छेदपर्यायत्वान्मुक्तिशब्दस्येति एवमनित्यैकान्तवादेऽपि सुखदुःखाद्यनुपपत्तिरनित्यं हि अत्यन्तोच्छेदधर्मकं तथाभूते चात्मनि पुण्योपादानक्रियाकारिणो निरन्वयं विनष्टत्वात् कस्य नाम तत्फलभूतसुखानुभवः एवं पापोपादानक्रियाकारिणोऽपि निरवयवनाशे कस्य दुःखसंवेदनमस्तु एवं चान्यः क्रियाकारी अन्यश्च तत्फलभोक्तेत्यसमञ्जसमापद्यते ।

अथ यस्मिन्नेव हि सन्ताने आहिता कर्मवासना ।
फलं तत्रैव सन्धत्ते कर्पासे रक्तता यथा ॥

इति वचनान्नासमञ्जसमित्यपि वाङ्मात्रं सन्तानवासनयोरवास्तवत्वेन प्रागेव निर्लोठितत्वात् तथा पुण्यपापे अपि न घटेते तयोर्हि अर्थक्रिया सुखदुःखोपभोगस्तदनुपपत्तिश्चानन्तरमेवोक्ता ततोऽर्थक्रियाकारित्वाभावात्तयोरप्यघटमानत्वं किं चानित्यः क्षणमात्रस्थायी तस्मिंश्च क्षणे उत्पत्तिमात्रव्यग्रत्वात्तस्य कुतः पुण्यपापोपादानक्रियार्जनं द्वितीयादिक्षणेषु चावस्थातुमेव न लभते पुण्यपापोपादानक्रियाऽभावे च पुण्यपापे कुतो निर्मूलत्वात्तदसत्त्वे च कुतस्तनः सुखदुःखभोगः आस्तां वा कथं चिदेतत् तथाहि पूर्वक्षणसदृशेनोत्तरक्षणेन भवितव्यम् उपादानानुरूपत्वादुपादेयस्य ततः पूर्वक्षणाद्दुःखितादुत्तरक्षणः कथं सुखित उत्पद्यते कथं च सुखितात्ततः स दुःखितः

स्यादिसदृशभागतापत्तेरेवं पुण्यपापादावपि तस्माद्यत्किंचिदेतत् एवं बन्धमोक्षयोरप्यसम्भवो लोकेऽपि हि य एव बद्धः स एव मुच्यते निरन्वयनाशाभ्युपगमे च एकाधिकरणत्वाभावात्सन्तानस्य चावस्तुत्वात्कुतस्तयोः सम्भावनामात्रमपीति परिणामिनि चात्मनि स्वीक्रियमाणे सर्वं निर्बाधमुपपद्यते परिणामोऽवस्थान्तरगमनं न च सर्वथा ह्यवस्थानं न च सर्वथा विनाशः "परिणामस्तद्विदामिष्ट" इति वचनात् पतञ्जलिटीकाकारोऽप्याह अस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः परिणाम इति एवं सामान्यविशेषसदसदभिलाप्यानभिलाप्य एकान्तवादेष्वपि सुखदुःखाद्यभावः स्वयमभियुक्तैरभ्यूह्यः अथोत्तरार्द्धव्याख्या एवमनुपपद्यमानेऽपि सुखदुःखभोगादिव्यवहारे परतीर्थिकैरघ च परमार्हतः शत्रुभिः परशब्दो हि शत्रुपर्यायोऽप्यस्ति दुर्नीतिवादव्यसनासिना नीयते एकदेशविशिष्टोऽर्थः प्रतीतिविषयमाभिरिति नीतयो नया दुष्टा नीतयो दुर्नीतयो दुर्नयास्तेषां वदनं परेभ्यः प्रतिपादनं दुर्नीतिवादस्तत्र यद्व्यसनमत्यासक्तिरौचित्यनिरपेक्षा प्रवृत्तिरिति यावत् दुर्नीतिवादव्यसनं तदेव सद्बोधशरीरोच्छेदनशक्तियुक्तत्वादसिरिवासिः कृपाणी दुर्नीतिवादव्यसनासिस्तेन दुर्नीतिवादव्यसनासिना करणभूतेन दुर्नयप्ररूपणहेवाकखड्गेन एवमित्यनुभवसिद्धं प्रकारमाह अपिशब्दस्य भिन्नक्रमत्वादशेषमपि जगन्निखिलमपि त्रैलोक्यगतजन्तुजातं

विलुप्तं सम्यग्ज्ञानादिभावप्राणव्यपरोपणेन व्यापादितं तत्त्रायस्वेत्याशयः सम्यग्ज्ञानादयो हि भावप्राणाः प्रावचनिकैर्गीयन्ते अत एव सिद्धेष्वपि जीवव्यपदेशोऽन्यथा हि जीवधातुः प्राणधारणार्थेऽभिधीयते तेषां च दशविधप्राणधारणाभावादजीवत्वप्राप्तिः सा च विरुद्धा तस्मात्संसारिणो दशविधद्रव्यप्राणधारणाज्जीवाः सिद्धाश्च ज्ञानादिभावप्राणधारणादिति सिद्धं दुर्नयस्वरूपं चोत्तरकाव्ये व्याख्यास्याम इति काव्यार्थः ॥ २७ ॥

सांप्रतं दुर्नयनयप्रमाणप्ररूपणद्वारेण "प्रमाणनयैरधिगम" इति वचनात् जीवाजीवादितत्त्वाधिगमनिबन्धनानां प्रमाणनयानां प्रतिपादयितुः स्वामिनः स्याद्वादविरोधिदुर्नयमार्गनिराकरिष्णुमनन्यसामान्यवचनातिशयं स्तुवन्नाह।

**सदेव सत्स्यात्सदिति त्रिधाऽर्थो**
**मीयेत दुर्नीतिनयप्रमाणैः।**
**यथार्थदर्शी तु नयप्रमाण-**
**पथेन दुर्नीतिपथं त्वमास्थः ॥२८॥**

अर्य्यते परिच्छिद्यत इत्यर्थः पदार्थस्त्रिधा त्रिभिः प्रकारैर्मीयेत परिच्छिद्येत विधौ सप्तमी कैस्त्रिभिः प्रकारैरित्याह दुर्नीतिनयप्रमाणै र्नीयते परिच्छिद्यते एकदेशविशिष्टोऽर्थ आभिरिति नीतयो नया

दुष्टा नीतयो दुर्नीतयो दुर्नया इत्यर्थः नया नैगमाद्याः प्रमीयते परिच्छिद्यते ऽर्थोऽनेकान्तविशिष्टोऽनेनेति प्रमाणं स्याद्वादात्मकं प्रत्यक्षपरोक्षलक्षणं दुर्नीतयश्च नयाश्च प्रमाणे च दुर्नीतिनयप्रमाणानि तैः केनोल्लेखेन मीयेतेत्याह सदेव सत्स्यात्सदिति अव्यक्तत्वान्नपुंसकत्वं यथा किं तस्य गर्भे जातमिति सदेवेति दुर्नयः सदिति नयः स्यात्सदिति प्रमाणं तथा हि दुर्नयस्तावत्सदेवेति ब्रवीति अस्त्येव घट इति अयं वस्तुन्येकान्तास्तित्वमेवाभ्युपगच्छन्नितरधर्माणां तिरस्कारेण स्वाभिप्रेतमेव धर्मं व्यवस्थापयति दुर्नयत्वं चास्य मिथ्यारूपत्वात् मिथ्यारूपत्वं च तत्र धर्मान्तराणां सतामपि निह्नवात् तथा सदित्युल्लेखवान्नयः स ह्यस्ति घट इति घटे स्वाभिमतमस्तित्वधर्मं प्रसाधयन् शेषधर्मेषु गजनिमीलिकामालम्बते न चास्य दुर्नयत्वं धर्मान्तरातिरस्कारात् न च प्रमाणत्वं स्याच्छब्देनालाञ्छितत्वात् स्यात्सदिति स्यात्कथं चित्सद्वस्तु इति प्रमाणं प्रमाणत्वं चास्य दृष्टे इष्टाबाधितत्वाद्विपक्षे बाधकसद्भावाच्च सर्वं हि वस्तु स्वरूपेण सत्पररूपेण चासदित्यसकृदुक्तं सदिति दिङ्मात्रदर्शनार्थमनया दिशा असत्त्वनित्यत्वानित्यत्ववक्तव्यत्वावक्तव्यत्वसामान्यविशेषादावपि बोद्धव्यम् इत्थं वस्तुस्वरूपमाख्याय स्तुतिमाह यथार्थदर्शीत्यादि दुर्नीतिपथं दुर्नयमार्गं तु शब्दस्य अवधारणार्थस्य भिन्नक्रमत्त्वात्त्वमेव आस्यस्त्वमेव निराकृतवान् न तीर्थान्तरदैवतानि केन

कृत्वा नयप्रमाणपथेन नयप्रमाणे उक्तस्वरूपे तयो-र्मार्गेण प्रचारेण यतस्त्वं यथार्थदर्शी यथार्थोऽस्ति तथैव पश्यतीत्येवंशीलो यथार्थदर्शी विमलकेव-लज्योतिषा यथावस्थितवस्तुदर्शी तीर्थान्तरशास्तार-स्तु रागादिदोषकलङ्कितत्वेन तथाविधज्ञानाभावान्न यथार्थदर्शिनस्ततः कथं नाम दुर्नयपथमथने प्रगल्भ-न्ते ते तपस्विनः न हि स्वयमनयप्रवृत्तः परेषामनयं निषेद्धुमुद्धुरतां धत्ते इदमुक्तं भवति यथा कश्चित्सन्मा-र्गवेदी परोपकारदुर्ललितः पुरुषश्चौर श्वापदकण्ट-काद्याकीर्णं मार्गं परित्यज्य पथिकानां गुणदोषोभय-विकलं दोषास्पृष्टगुणयुक्तं च मार्गमुपदर्शयति एवं जगन्नाथोऽपि दुर्नयतिरस्करणेन भव्येभ्यो नयप्रमा-णमार्गं प्ररूपयतीति आस्थ इत्यस्यतेरद्यतन्यां "शा-स्त्यस्तिवक्तिख्यातेरङि" त्यङि "श्वयत्यसवचपत श्वास्थ-वोचपप्तमि" ति अस्थादेशे स्वरादेस्तास्विति वृद्धौ रूपं मुख्यवृत्त्या च प्रमाणस्यैव प्रामाण्यं यच्चात्र नयानां प्र-माणतुल्यकक्षताख्यापनं तत्तेषामनुयोगद्वारभूततया प्रज्ञापनाङ्गत्वज्ञापनार्थं चत्वारि हि प्रवचनानुयो-गमहानगरस्य द्वाराणि उपक्रमो निक्षेपो ऽनुगमो नयश्चेति एतेषां च स्वरूपमावश्यकभाष्यादिभिर्निरूप-णीयम् इह तु नोच्यते ग्रन्थगौरवभयात् अत्र चैकत्र समासान्तः पथिन्शब्दः अन्यत्र चाव्युत्पन्नः पथ-शब्दोऽदन्त इति पथशब्दस्य द्विःप्रयोगो न दुष्यति अ-थ दुर्नयनयप्रमाणस्वरूपं किञ्चिन्निरूप्यते तत्रापि प्र-

यमं नयस्वरूपं तदनधिगमे दुर्नयस्वरूपस्य दुष्परिज्ञानत्वादत्र चाचार्येण प्रथमं दुर्नयनिर्देशो यथोत्तरं प्राधान्यावबोधनार्थः कृतः तत्र प्रमाणप्रतिपन्नार्थैकदेशपरामर्शी नयः अनन्तधर्माध्यासितं वस्तु स्वाभिप्रेतैकधर्मविशिष्टं नयति संवेदनकोटिमारोहयतीति नयः प्रमाणप्रवृत्तेरुत्तरकालभावी परामर्श इत्यर्थः नयाश्चानन्तानन्तधर्मत्वाद्वस्तुनस्तदेकधर्मपर्यवसितानां वक्तुरभिप्रायाणां च नयत्वात् तथा च वृद्धाः "जावई थाव पणपहा तावईयाचे वहुन्ति नयवाया" इति। तथापि चिरन्तनाचार्यैः सर्वसंग्राहिसप्ताभिप्रायपरिकल्पनाद्वारेण सप्तनयाः प्रतिपादितास्तद्यथा नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवंभूता इति कथमेषां सर्वसंग्राहकत्वमिति चेदुच्यते अभिप्रायस्तावदर्थद्वारेण शब्दद्वारेण वा प्रवर्तते गत्यन्तराभावात् तत्र ये केचनार्थनिरूपणप्रवणाः प्रमात्रभिप्रायास्ते सर्वेऽप्याद्ये नयचतुष्टयेऽन्तर्भवन्ति ये च शब्दविचारचतुरास्ते शब्दादिनयत्रय इति तत्र नैगमः सत्तालक्षणं महासामान्यमवान्तरसामान्यानि च द्रव्यत्वगुणत्वकर्मत्वादीनि तथान्त्यान्विशेषान्सकलासाधारणरूपलक्षणानवान्तरविशेषांश्चापेक्षया पररूपव्यावर्त्तनक्षमान् सामान्यादत्यन्तविनिर्लुठितस्वरूपानभिप्रैति इदं च स्वतन्त्रसामान्यविशेषवादे क्षुण्णमिति न पृथक्प्रयत्नः प्रवचनप्रसिद्धनिलयनप्रस्थदृष्टान्तद्वयगम्यश्चायं संग्रहस्तु अशेषविशेषतिरोधानद्वारेण सामा-

न्यरूपतया विश्वमुपादत्ते एतच्च सामान्यैकान्तवादे प्राक्प्रपञ्चितं व्यवहारस्त्वेवमाह यथा लोकग्राहमेव वस्त्वस्तु किमनया अदृष्टाव्यवह्रियमाणवस्तुपरिकल्पनकष्टपिष्टिकया यदेव च लोकव्यवहारपथमवतरति तस्यैवानुग्राहकं प्रमाणमुपलभ्यते नेतरस्य न हि सामान्यमनादिनिधनमेकं संग्रहाभिमतं प्रमाणभूमिस्तथानुभवाभावात् सर्वस्य सर्वदर्शित्वप्रसङ्गाच्च नापि विशेषाः परमाणुलक्षणाः क्षणक्षयिणः प्रमाणगोचरास्तथाप्रवृत्तेरभावात् तस्मादिदमेव निखिललोकाबाधितं प्रमाणप्रसिद्धं कियत्कालभावि स्थूलतामाबिभ्राणमुदकाद्याहरणाद्यर्थक्रियानिर्वर्तनक्षमं वस्तुरूपं पारमार्थिकं पूर्वोत्तरकालभावि तत्पर्यायपर्यालोचना पुनरज्यायसी तत्र प्रमाणप्रसराभावात् प्रमाणमन्तरेण विचारस्य कर्तुमशक्यत्वात् अवस्तुत्वाच्च तेषां किं तद्गोचरपर्यालोचनेन तथा हि पूर्वोत्तरकालभाविनो द्रव्यविवर्ताः क्षणक्षयिपरमाणुलक्षणा वा विशेषा न कथंचन लोकव्यवहारमुपरचयन्ति तन्न ते वस्तुरूपाः लोकव्यवहारोपयोगिनामेव वस्तुत्वादत एव पन्थाः गच्छति कुण्डिका स्रवति गिरिर्दह्यते मञ्चाः क्रोशन्तीत्यादिव्यवहाराणां प्रामाण्यं तथा च वाचकमुख्यः "लौकिकसम उपचारप्रायो विस्तृतार्थो व्यवहार" इति ऋजुसूत्रः पुनरिदं मन्यते वर्तमानक्षणविवर्त्येव वस्तुरूपं नातीतमनागतं च अतीतस्य विनष्टत्वादनागतस्यालब्धात्मलाभत्वात्खरविषाण-

दिभ्योऽविशिष्यमाणतया सकलशक्तिविरहरूपत्वा-न्नार्थक्रियानिर्वर्तनक्षमत्वं तदभावाच्च न वस्तुत्वं यदेवार्थक्रियाकारि तदेव परमार्थसदिति वचनात् वर्तमानक्षणालिङ्गितं पुनर्वस्तुरूपं समस्तार्थक्रियासु व्याप्रियत इति तदेव पारमार्थिकं तदपि च निरंश-मभ्युपगन्तव्यम् अंशव्याप्तेर्युक्तिरिक्तत्वात् एकस्यानेक-स्वभावतामन्तरेणानेकस्वावयवव्यापनायोगात् अनेकस्व-भावतैवास्त्विति चेन्न विरोधव्याघ्राघ्रातत्वात् तथा हि यदेकः स्वभावः कथमनेकोऽनेकश्चेत्कथमेक एकानेकयोः परस्परपरिहारेणावस्थानात्तस्मात्स्वरू-पनिमग्नाः परमाणव एव परस्परोपसर्पणद्वारेण कथं-चिन्निचयरूपतामापन्ना निखिलकार्येषु व्यापारभाज इति त एव स्वलक्षणं न स्थूलतां धारयत् पारमार्थि-कमिति एवमस्याभिप्रायेण यदेव स्वकीयं तदेव वस्तु न परकीयम् अनुपयोगित्वादितिशब्दस्तु रूढितो याव-न्तो ध्वनयः कस्मिंश्चिदर्थे प्रवर्तन्ते यथेन्द्रशक्रपुरन्द-रादयः सुरपतौ तेषां सर्वेषामप्येकमर्थमभिप्रैति किल प्रतीतिवशाद्यथाशब्दाव्यतिरेकोऽर्थस्य प्रति-पाद्यते तथैव तस्यैकत्वं वा प्रतिपादनीयं न चेन्द्र-शक्रपुरन्दरादयः पर्यायशब्दा विभिन्नार्थवाचितया कदा चन प्रतीयन्ते तेभ्यः सर्वदैकाकारपरामर्शोत्प-त्तेरस्खलितवृत्तितया तथैव व्यवहारदर्शनात् तस्मा-देक एव पर्यायशब्दानामर्थ इति शब्द्यते आहूयतेऽ-नेनाभिप्रायेणार्थ इति निरुक्तादेकार्थप्रतिपादना-

भिप्रायेणैव पर्यायध्वनीनां प्रयोगात् यथा चायं पर्यायशब्दानामेकमर्थमभिप्रैति तथा तटस्तटी तट-मिति विरुद्धलिङ्गलक्षणधर्माभिसंबन्धाद्वस्तुनो भेदं चाभिधत्ते न हि विरुद्धधर्मकृतं भेदमनुभवतो वस्तुनो विरुद्धधर्मायोगो युक्तः एवं संख्याकालकारकपुरु-षादिभेदादपि भेदोऽभ्युपगन्तव्यः तत्र संख्या एक-त्वादिः कालोऽतीतादिः कारकं कर्त्रादिः पुरुषः प्रथमपुरुषादिः समभिरूढस्तु पर्यायशब्दानां प्रवि-भक्तमेवार्थमभिमन्यते तद्यथा इन्दनादिन्द्रः परमै-श्वर्यमिन्द्रशब्दवाच्यं परमार्थतस्तद्वत्यर्थे अतद्वति पु-नरुपचारतो न वा कश्चित् तद्वान् सर्वशब्दानां पर-स्परविभक्तार्थप्रतिपादितया आश्रयाश्रयिभावेन प्रवृ-त्त्यसिद्धेः एवं शकनाच्छक्रः पूर्दारणात्पुरन्दर इत्यादि-भिन्नार्थत्वं सर्वशब्दानां दर्शयति प्रमाणयति च शब्दा अपि भिन्नार्थाः प्रविभक्तव्युत्पत्तिनिमित्तकत्वादिह ये ये प्रविभक्तव्युत्पत्तिनिमित्तकास्ते ते भिन्नार्थाः यथेन्द्रपशुपुरुषशब्दा विभिन्नव्युत्पत्तिनिमित्तकाश्च पर्यायशब्दा अपि अतो भिन्नार्था इति एवं-भूतः पुनरेवं भाषते यस्मिन्नर्थे शब्दो व्युत्पाद्यते स व्युत्पत्तिनिमित्तमर्थो यदैव प्रवर्तते तदैव तं शब्दं प्रव-र्तमानमभिप्रैति न सामान्येन यथोदकाहरणवेलायां योषिदादिमस्तकारूढो विशिष्टचेष्टावानेव घटोऽभि-धीयते न शेषो घटशब्दव्युत्पत्तिनिमित्तशून्यत्वात् प-टादिवदिति अतीतां भाविनीं वा चेष्टामङ्गीकृत्य सा-

सान्येनैवोच्यत इति चेन्न तयोर्विनष्टानुत्पन्नतया शशविषाणकल्पत्वात् तथापि तद्द्वारेण शब्दप्रवर्तने सर्वत्र प्रवर्तयितव्यो विशेषाभावात् किं च यद्यतीतवत्स्यच्चेष्टापेक्षया घटशब्दोऽचेष्टावत्यपि प्रयुज्येत कपालमृत्पिण्डादावपि तत्प्रवर्तनं दुर्निवारं स्याद्विशेषाभावात् तस्माद्यत्र क्षणे व्युत्पत्तिनिमित्तमविकलमस्ति तस्मिन्नेव सोऽर्थस्तच्छब्दवाच्य इति अत्र संग्रहश्लोकाः ।

अन्यदेव हि सामान्यमभिन्नं ज्ञानकारणं ।
विशेषोऽप्यन्य एवेति मन्यते नैगमो नयः ॥१॥
सद्रूपतानतिक्रान्तस्वस्वभावमिदं जगत् ।
सत्तारूपतया सर्वं संगृह्णन् संग्रहो मतः ॥ २ ॥
व्यवहारस्तु तामेव प्रतिवस्तुव्यवस्थिताम् ।
तथैव दृश्यमानत्वाद्व्यापारयति देहिनः ॥ ३ ॥
तत्रर्जुसूत्रनीतिः स्याच्छुद्धपर्यायसंश्रिता ।
नश्वरस्यैव भावस्य भावात्स्थितिवियोगतः ॥४॥
विरोधलिङ्गसंख्यादिभेदाद्भिन्नस्वभावताम् ।
तस्यैव मन्यमानोऽयं शब्दः प्रत्यवतिष्ठते ॥ ५ ॥
तथाविधस्य तस्यापि वस्तुनः क्षणवर्त्तिनः ।
ब्रूते समभिरूढस्तु संज्ञाभेदेन भिन्नताम् ॥ ६ ॥
एकस्यापि ध्वनेर्वाच्यं सदा तन्नोपपद्यते ।
क्रियाभेदेन भिन्नत्वादेवंभूतोऽभिमन्यते ॥ ७ ॥

अत एव च परामर्शा अभिप्रेतधर्मावधारणात्मकतया शेषधर्मातिरस्कारेण प्रवर्तमाना दुर्नयसंज्ञामश्नुवते तद्बलप्रभावितसत्ताका हि खल्वेते प-

रप्रवादास्तथा हि नैगमनयदर्शनानुसारिणौ नैयायिकवैशेषिकौ संग्रहाभिप्रायप्रवृत्ताः सर्वेऽप्यद्वैतवादाः सांख्यदर्शनं च व्यवहारनयानुपाति प्रायश्चार्वाकदर्शनम् ऋजुसूत्राकूतप्रवृत्तबुद्धयस्तथागताः शब्दादिनयावलम्बिनो वैयाकरणादयः उक्तं च सोदाहरणं नयदुर्नयस्वरूपं श्रीदेवसूरिपादैः तथा च तद्ग्रन्थः "नीयते येन श्रुताख्यप्रमाणविषयीकृतस्यार्थस्यांशस्तदितरांशौदासीन्यतः स प्रतिपत्तुरभिप्रायविशेषो नय" इति स्वाभिप्रेतादंशादितरांशापलापी पुनर्नयाभासः स व्याससमासाभ्यां द्विप्रकारः व्यासतोऽनेकविकल्पः समासतस्तु द्विभेदो द्रव्यार्थिकः पर्यायार्थिकश्च आद्यो नैगमसंग्रहव्यवहारभेदात् त्रेधा धर्मयोर्धर्मिणोर्धर्मधर्मिणोश्च प्रधानोपसर्जनभावेन यद्विवक्षणं स नैकगमो नैगमः सच्चैतन्यमात्मनीति धर्मयोर्वस्तुपर्यायवद्द्रव्यमिति धर्मिणोः क्षणमेकं सुखी विषयासक्तजीव इति धर्मधर्मिणो र्धर्मद्वयादीनामैकान्तिकपार्थक्याभिसंधिर्नैगमाभासः यथात्मनि सत्त्वचैतन्ये परस्परमत्यन्तपृथग्भूते सामान्यमात्रग्राही परामर्शः संग्रहः अयमुभयविकल्पः परोऽपरश्च अशेषविशेषेष्वौदासीन्यं भजमानः शुद्धद्रव्यं सन्मात्रमभिमन्यमानः परः संग्रहः विश्वमेकं सदविशेषादिति यथा सत्ताद्वैतं स्वीकुर्वाणाः सकलविशेषान्निराचक्षाणास्तदाभासः यथा सत्तैव तत्त्वं ततः पृथग्भूतानां विशेषाणामदर्शनात् द्रव्यत्वादीन्यवान्तरसामान्यानि मन्वानस्तद्भेदेषु गजनिमीलिकामव-

लम्बमानः पुनरपसंग्रहः धर्माधर्माकाशकालपुद्गलद्रव्याणामैक्यं द्रव्यत्वाभेदादित्यादिर्यथा तद्द्रव्यत्वादिकं प्रतिजानानस्तद्विशेषान्निह्नुवानस्तदाभासः यथा द्रव्यत्वमेव तत्त्वं ततोऽर्थान्तरभूतानां द्रव्याणामनुपलब्धेः संग्रहेण गोचरीकृतानामर्थानां विधिपूर्वमवहरणं येनाभिसन्धिना क्रियते स व्यवहारः यथा यत्सत्तद्द्रव्यं पर्यायो वेत्यादिः यः पुनरपारमार्थिकं द्रव्यपर्यायप्रविभागमभिप्रैति स व्यवहाराभासः यथा चार्वाकदर्शनं पर्यायार्थिकश्चतुर्द्धा ऋजुसूत्रः शब्दः समभिरूढ एवंभूतश्च ऋजुवर्तमानक्षणस्थायिपर्यायमात्रप्राधान्यतः सूत्रयन्नभिप्रायः ऋजुसूत्रः यथा सुखविवर्तः संप्रत्यस्तीत्यादिः सर्वथा द्रव्यापलापी पुनस्तदाभासः यथा बभूव भवति भविष्यति सुमेरुरित्यादिः तद्भेदेन तस्य तमेव समर्थयमानो यथा तथागतमतं कालादिभेदेन ध्वनेरर्थभेदं प्रतिपद्यमानः शब्दः तदाभासः यथा बभूव भवति भविष्यति सुमेरुरित्यादयो भिन्नकालाः शब्दा भिन्नकालमेवाभिदधति भिन्नकालशब्दत्वात्तादृक्सिद्धान्यशब्दवदित्यादिः पर्यायशब्देषु निरुक्तिभेदेन भिन्नमर्थं समभिरोहयन्समभिरूढः इन्दनादिन्द्रः शकनाच्छक्रः पूर्दारणात् पुरन्दर इत्यादिषु यथा पर्यायध्वनीनामभिधेयनानात्वमेव कक्षीकुर्वाणस्तदाभासः यथेन्द्रः शक्रः पुरन्दर इत्यादयः शब्दा भिन्नाभिधेया एव भिन्नशब्दत्वात्करिकुरङ्गशब्दवदित्यादिः शब्दानां स्वप्रवृत्तिनिमि-

त्तभूतक्रियाविष्टमर्थं वाच्यत्वेनाऽभ्युपगच्छन्नेवंभूतः यथेन्दनमनुभवन्निन्द्रः शकनक्रियापरिणतः शक्रः पूर्दारणप्रवृत्तः पुरन्दर इत्युच्यते क्रियानाविष्टं वस्तु शब्दो वाच्यतया प्रतिक्षिपंस्तु तदाभासः यथा विशिष्टचेष्टाशून्यं घटाख्यं वस्तु नैव घटशब्दवाच्यं घटशब्दप्रवृत्तिनिमित्तभूतक्रियाशून्यत्वात्पटवदित्यादिः एतेषु चत्वारः प्रथमेऽर्थ निरूपणप्रवणत्वादर्थ नयाः शेषास्तु त्रयः शब्दवाच्यार्थगोचरतया शब्दनयाः पूर्वःपूर्वो नयः प्रचुरगोचरः परः परस्तु परिमितविषयः सन्मात्रगोचरात्संग्रहान्नैगमो भावाभावभूमिकत्वाद् भूमविषयः सद्विशेषप्रकाशकाद् व्यवहारतः संग्रहः समस्तसत्समूहोपदर्शकत्वाद्बहुविषयः वर्तमानविषयादृजुसूत्राद्व्यवहारस्त्रिकालविषयावलम्बित्वादनल्पार्थः कालादिभेदेन भिन्नार्थोपदर्शिनः शब्दादृजुसूत्रस्तद्विपरीतवेदकत्वान्महार्थः प्रतिपर्यायशब्दमर्थभेदमभीप्सतः समभिरूढाच्छब्दस्तद्विपर्ययानुयायित्वात्प्रभूतविषयः प्रतिक्रियं विभिन्नमर्थं प्रतिजानानादेवंभूतात्समभिरूढस्तदन्यथास्थापकत्वान्महागोचरः नयवाक्यमपि स्वविषये वर्तमानं विधिप्रतिषेधाभ्यां सप्तभङ्गीमनुव्रजतीति विशेषार्थिनां नयानां नामान्वयविशेषलक्षणाक्षेपपरिहारादिचर्चस्तु भाष्यमहोदधिगन्धहस्तिटीकान्यायावतारादिग्रन्थेभ्यो निरीक्षणीयः प्रमाणं तु सम्यगर्थनिर्णयलक्षणं सर्वनयात्मकं स्याच्छब्दलाञ्छितानां नयानामेव

प्रमाणव्यपदेशभाक्त्वात् तथा च श्रीविमलनाथ-स्तवे समन्तभद्रः।

नयास्तव स्यात्पदलाञ्छना इमे
रसोपविद्धा इव लोहधातवः।
भवन्त्यभिप्रेतफला यतस्ततो
भवन्तमार्याः प्रणता हितैषिणः॥

इति तच्च द्विविधं प्रत्यक्षं परोक्षं तत्र प्रत्यक्षं द्विधा सांव्यवहारिकं पारमार्थिकं च सांव्यवहारिकं द्विविध-मिन्द्रियानिन्द्रियनिमित्तभेदात्तद्द्वितयमवग्रहेहावाय-धारणाभेदादेकैकशश्चतुर्विकल्पम् अवग्रहादीनां स्वरू-पं सुप्रतीतत्वान्न प्रतन्यते पारमार्थिकं पुनरुत्पत्त-भावात्मसमात्रापेक्षं तद्द्विविधं क्षायोपशमिकं क्षायिकं च आद्यम् अवधिमनःपर्यायभेदाद् द्विधा क्षायिकं तु केवलज्ञानमिति परोक्षं च स्मृतिप्रत्यभिज्ञानोहाऽनु-मानागमभेदात्पञ्चप्रकारं तत्र संस्कारप्रबोधसम्भूतम-नुभूतार्थविषयं तदित्याकारं वेदनं स्मृतिः तत्तीर्थ-करबिम्बमिति यथा अनुभवस्मृतिहेतुकं तिर्यगूर्ध्वता-सामान्यादिगोचरं संकलनात्मकं ज्ञानं प्रत्यभिज्ञानं यथा तज्जातीय एवायं गोपिण्डो गोसदृशो गवयः स एवायं जिनदत्त इत्यादिः उपलम्भानुपलम्भसम्भवं त्रि-कालीकलितसाध्यसाधनसम्बन्धाद्यालम्बनमिदमस्मिन् सत्येव भवतीत्याद्याकारं संवेदनमूहस्तर्कापरपर्यायः यथा यावान् कश्चिद्धूमः स सर्वो वह्नौ सत्येव भवती-ति तस्मिन्नसत्यसौ न भवत्येवेति वा अनुमानं द्विधा

स्वार्थं परार्थं च तत्रान्यथानुपपत्त्येकलक्षणहेतुग्रहण संबन्धस्मरणकारणकं साध्यविज्ञानं स्वार्थं पक्षहेतुवचनात्मकं परार्थमनुमानमुपचारात् आप्तवचनादाविर्भूतमर्थसंवेदनमागमः उपचारादाप्तवचनं चेति स्मृत्यादीनां च विशेषस्वरूपं स्याद्वादरत्नाकरात् साक्षेपपरिहारं ज्ञेयमिति प्रमाणान्तराणां पुनरर्थापत्त्युपमानसम्भवप्रातिभैतिह्यानामत्रैवान्तर्भावः सन्निकर्षादीनां तु जडत्वादेव न प्रामाण्यमिति तदेवंविधेन नयप्रमाणोपन्यासेन दुर्नयमार्गस्त्वया खिलीकृत इति काव्यार्थः ॥२८॥

इदानीं सप्तद्वीपसमुद्रमात्रो लोक इति वावदूकलोकानां तन्मात्रलोके परिमितानामेव सत्त्वानां सम्भवात् परिमितात्मवादिनां दोषदर्शनमुखेन भगवत्प्रणीतं जीवानन्त्यवादं निर्दोषतयाऽभिष्टुवन्नाह।

**मुक्तोऽपि वाऽभ्येतु भवं भवो वा**
**भवस्थशून्योऽस्तु मितात्मवादे।**
**षड्जीवकायं त्वमनन्तसंख्य-**
**माख्यस्तथा नाथ यथा न दोषः॥२९॥**

मितात्मवादे संख्यातानामात्मनामभ्युपगमे दूषणद्वयमुपतिष्ठते तत्क्रमेण दर्शयति मुक्तोऽपि वा ऽभ्येतु भवमिति मुक्तो निर्वृतिप्राप्तः सोऽपि वा ऽपिर्विस्मये वा शब्द उत्तरदोषापेक्षया समुच्चयार्थः यथा

देवो वा दानवो वेति भवमभ्येतु संसारमभ्यागच्छतु इत्येको दोषप्रसङ्गः भवो वा भवस्थशून्योऽस्तु भवः संसारः स वा भवस्थशून्यः संसारिजीवैर्विरहितो ऽस्तु भवतु इति द्वितीयो दोषप्रसङ्गः इदमत्राकूतं यदि परिमिता एवात्मानो मन्यन्ते तदा तत्त्वज्ञानाभ्यासप्रकर्षादिक्रमेणापवर्गं गच्छत्सु तेषु संभाव्यते खलु कश्चित्कालो यत्र तेषां निर्वृतिकालस्यानादिनिधनत्वादात्मनां च परिमितत्वात् संसारस्य रिक्तता भवन्ती केन वार्यतां समुन्नीयते हि प्रतिनियतसलिलपटलपरिपूरिते सरसि पवनतपनातपजनोदञ्चनादिना कालान्तरे रिक्तता न चायमर्थः प्रामाणिकस्य कस्यचित्प्रसिद्धः संसारस्य स्वरूपहानिप्रसङ्गात् तत्स्वरूपं ह्येतदेव कर्मवशवर्त्तिनः प्राणिनः संसरन्ति समसार्षुः संसरिष्यन्ति चेति सर्वेषां च निर्वृतत्वे संसारस्य वा रिक्तत्वं हठादभ्युपगन्तव्यं मुक्तैर्वा पुनर्भव आगन्तव्यं न च क्षीणकर्मणां भवाधिकारः।

दग्धे बीजे यथा ऽत्यन्तं प्रादुर्भवति नाङ्कुरः।
कर्मबीजे तथा दग्धे न रोहति भवाङ्कुरः ॥१॥

इति वचनात् आह च पतञ्जलिः "सति मूले तद्विपाको जात्यायुर्भोगा" इति एतट्टीका "च सत्सु क्लेशेषु कर्माशयो विपाकारम्भी भवति नोच्छिन्नक्लेशमूलः यथा तुषावनद्धाः शालितण्डुला अदग्धबीजभावाः प्ररोहणसमर्था भवन्ति नापनीततुषा दग्धबीजभावा तथा क्लेशावनद्धः कर्माशयो विपाकप्ररोही भवति

नापनीतक्लेशो न दग्धबीजभावो वेति" स च विपाक-स्त्रिविधो जातिरायुर्भोग इति अक्षपादोऽप्याह "न प्रवृत्तिः प्रतिसंधानाय हीनक्लेशस्ये" ति एवं विभङ्गज्ञानिशिवराजर्षिमतानुसारिणो दूषयित्वोत्त-रार्द्धेन भगवदुपज्ञमपरिमितात्मवादं निर्दोषतया स्तौति षड्जीवेत्यादि त्वं तु हे नाथ अनन्तसंख्यम् अनन्ताख्यसंख्याविशेषयुक्तः षड्जीवकायम् अजीवन् जीवन्ति जीविष्यन्ति चेति जीवा इन्द्रियादिज्ञाना-दिद्रव्यभावप्राणधारणयुक्तास्तेषां "संचे वानूर्ध्वे" इति चिनोतेर्घञि आदेश्च कत्वे कायः समूहो जीवकायः पृथिव्यादिषण्णां जीवकायानां समाहारः षड्जीव-कायं पात्रादिदर्शनान्नपुंसकत्वम् अथवा षण्णां जीवा-नां कायः प्रत्येकं संघातः षड्जीवकायस्तं षड्जीव-कायं पृथिव्यप्तेजोवायुवनस्पतित्रसलक्षणषड्जीवनि-कायं तथा तेन प्रकारेण आख्यः मर्यादया प्ररूपि-तवान् यथा येन प्रकारेण न दोषो दूषणमिति जात्यपेक्षमेकवचनं प्रागुक्तदोषद्वयजातीया अन्येऽपि दोषा यथा न प्रादुःष्यन्ति तथा त्वं जीवानन्त्यमुपदि-ष्टवानित्यर्थः आख्य इति आङ्पूर्वस्य ख्यातेरङि सिद्धिः त्वमित्येकवचनं चेदं ज्ञापयति यज्जगद्गुरोरेवैकस्ये-दृक्प्ररूपणसामर्थ्यं न तीर्थान्तरशास्तृणामिति पृथि-व्यादीनां पुनर्जीवत्वमित्थं साधनीयं यथा सात्मिका विद्रुमशिलादिरूपा पृथिवी छेदे समानधातूत्थानाद् दर्भाङ्कुरवत् भौममम्भोऽपि सात्मकं क्षतभूसजाती-

यस्य स्वभावस्य सम्भवात् शालूरवत् अन्तरिक्षमपि सा-
त्मकम् अभ्रादिविकारे स्वतःसम्भूय पातात् मत्स्या-
दिवत् तेजोऽपि सात्मकम् आहारोपादानेन वृद्ध्या-
दिविकारोपलम्भात् पुरुषाङ्गवत् वायुरपि सात्मकः
अपरप्रेरितत्वे तिर्यग्गतिमत्वाद्गोवत् वनस्पतिरपि
सात्मकः छेदादिभिर्म्लान्यादिदर्शनात् पुरुषाङ्गवत्
केषांचित् स्वाङ्गोपाङ्गोपश्लेषादिविकाराच्च अपकर्ष-
तश्चैतन्याद्वा सर्वेषां सात्मकत्त्वसिद्धिराप्तवचनाच्च
त्रसेषु च कृमिपिपीलिकाभ्रमरमनुष्यादिषु न केषां-
चित्सात्मकत्त्वे विगानमिति यथा च भगवदुपज्ञे
जीवानन्त्ये न दोषस्तथा दिग्मात्रं भाव्यते भगवन्मते
हि षस्मां जीवनिकायानामेतदल्पबहुत्वं सर्वस्तोका-
स्त्रसकायिनस्तेभ्योऽसंख्यातगुणास्तेजःकायिकास्तेभ्यो
विशेषाधिका पृथिवीकायिकास्तेभ्यो विशेषाधिका अ-
प्कायिकास्तेभ्यो विशेषाधिका वायुकायिकास्तेभ्योऽन-
न्तगुणा वनस्पतिकायिकास्ते च व्यावहारिका अ-
व्यावहारिकाश्च ।

गोलायअसंगिज्जा असंखनिग्गोयगोलउभणिउ ।
इक्किक्कंमि निगोएअणन्तजीवामुणेयव्व ॥ १ ॥
सिज्भन्तिजतियाखलु इहसंववहारजीवरासिउ ।
इंति अणाइवणस्सइ रासीउततियातंमि ॥ २ ॥

इति वचनात् यावन्तश्च यतो गच्छन्ति मुक्तिं
जीवास्तावन्तोऽनादिनिगोदवनस्पतिराशेस्तत्रागच्छ-
न्ति न च तावता तस्य काचित्परिहाणिर्नि-

गोदजीवानन्त्यस्याक्षयत्वात् निगोदस्वरूपं च सम-यसागरादवगन्तव्यम् अनाद्यनन्तेऽपि काले ये के-चिन्निर्वृता निर्वान्ति निर्वास्यन्ति च ते निगोदा-नामनन्तभागेऽपि न वर्त्तन्ते नावर्त्तिषत न वर्त्स्यन्ति ततश्च कथं मुक्तानां भवागमनप्रसङ्गः कथं संसार-स्य रिक्तताप्रसक्तिरिति अभिप्रेतं चैतदन्ययूथ्यानाम-पि यथा चोक्तं वार्त्तिककारेण।

अत एव विशुद्धत्सु मुच्यमानेषु सन्ततम्।
ब्रह्माण्डलोकजीवानामनन्तत्वादशून्यता ॥१॥
अन्त्यन्यूनातिरिक्तत्वे युज्यते परिमाणवत्।
वस्तुन्यपरिमेये तु नूनं तेषामसम्भवः ॥ २ ॥
इति काव्यार्थः ॥ २९ ॥

अधुना परदर्शनानां परस्परविरुद्धार्थसमर्थकत-या मत्सरित्वं प्रकाशयन् सर्वज्ञोपज्ञसिद्धान्तस्यान्यो-न्यानुगतसर्वनयमयतया मात्सर्याभावमाविर्भावयति।

**अन्योन्यपक्षप्रतिपक्षभावात्**
**यथा परे मत्सरिणः प्रवादाः।**
**नयानशेषानविशेषमिच्छन्**
**न पक्षपाती समयस्तथा ते ॥३०॥**

प्रकर्षेणोद्यते प्रतिपाद्यते स्वाभ्युपगतोऽर्थो यैरिति प्रवादाः यथा येन प्रकारेण परे भवच्छासनादन्ये प्रवादा दर्शनानि मत्सरिणः अतिशायने मत्वर्थी-यविधानात्सातिशयासहनताशालिनः क्रोधकषा-

अकलुषितान्तःकरणाः सन्तः पक्षपातिनः इतरपक्षतिरस्कारेण स्वकक्षीकृतपक्षव्यवस्थापनप्रवणा वर्तन्ते कस्मादितोर्मत्सरेण इत्याह अन्योन्यपक्षप्रतिपक्षभावात् पच्यते व्यक्तीक्रियते साध्यधर्मवैशिष्ट्येन हेत्वादिभिरिति पक्षः कक्षीकृतधर्मप्रतिष्ठापनाय साधनोपन्यासस्तस्य प्रतिकूलः पक्षः प्रतिपक्षः पक्षस्य प्रतिपक्षो विरोधी पक्षस्तस्य भावः पक्षप्रतिपक्षभावः अन्योन्यं परस्परं यः पक्षप्रतिपक्षत्वम् अन्योन्यपक्षप्रतिपक्षभावस्तस्मात् तथा हि य एव मीमांसकानां नित्यः शब्द इति पक्षः स एव च सौगतानां प्रतिपक्षस्तन्मते शब्दस्यानित्यत्त्वात् य एव सौगतानाम् अनित्यः शब्द इति पक्षः स एव मीमांसकानां प्रतिपक्ष एवं सर्वप्रयोगेषु योज्यं तथा तेन प्रकारेण ते तव समयक् एति गच्छति शब्दोऽर्थमनेनेति "पुन्नाम्नि घे" समयः संकेतो यद्वा सम्यगवैपरीत्येनेयन्ते ज्ञायन्ते जीवाजीवादयोऽर्था अनेनेति समयः सिद्धान्तोऽथ वा सम्यगयन्ते गच्छन्ति जीवादयः पदार्थाः स्वस्मिन् रूपे प्रतिष्ठां प्राप्नुवन्ति अस्मिन्निति समय आगमः न पक्षपाती नैकपक्षानुरागी पक्षपातित्वस्य कारणं मत्सरित्वं परप्रवादेषूक्तं त्वत्समयस्य च मत्सरित्वाभावा न्न पक्षपातित्वं पक्षपातित्वं हि मत्सरित्वेन व्याप्तं व्यापकं च निवर्तमानं व्याप्यमपि निवर्तयतीति मत्सरित्वे निवर्तमाने पक्षपातित्त्वमपि निवर्त्तत

इति वाच्यवाचकभावलक्षणे सम्बन्धे षष्ठी सूत्रापेक्षया गणधरकर्तृकत्वेऽपि समयस्यार्थापेक्षया भगवत्कर्तृकत्वाद्वाच्यवाचकभावो न विरुध्यते "अत्थं भासइ अरहा सुत्तं गंथन्ति गणहराणिउणम्मि" ति वचनात् अथ वा उत्पादव्ययध्रौव्यप्रपञ्चः समयस्तेषां च भगवता साक्षान्मातृकापदरूपतयाभिधानात् तथा चार्षम् "उप्पन्ने वा विगमे वा धुवेति वा" इत्यदोषः मत्सरित्वाभावमेव विशेषणद्वारेण समर्थयति नयानशेषानविशेषमिच्छन् इति अशेषान् समस्तान् नयान् नैगमादीन् अविशेषं निर्विशेषं यथा भवत्येवमिच्छन्नाकाङ्क्षन् नयात्मकत्वादनेकान्तवादस्य यथा विशकलितानां मुक्तामणीनामेकसूत्रानुस्यूतानां हारव्यपदेश एवं पृथगभिसन्धीनां नयानां स्याद्वादलक्षणैकसूत्रप्रोतानां श्रुताख्यप्रमाणव्यपदेश इति ननु प्रत्येकं नयानां विरुद्धत्वे कथं समुदितानां निर्विरोधिता उच्यते यथा हि समीचीनं मध्यस्थं न्यायनिर्णेतारमासाद्य परस्परं विवदमाना अपि वादिनो विवादाद्विरमन्ति एवं नया अन्योन्यं वैरायमाणा अपि सार्वज्ञं शासनमुपेत्य स्याच्छब्दप्रयोगोपशमितविप्रतिपत्तयः सन्तः परस्परमत्यन्तसुहृद्भूयावतिष्ठन्ते एवं च सर्वनयात्मकत्वे भगवत्समयस्य सर्वदर्शनमयत्वमविरुद्धमेव नयरूपत्वाद्दर्शनानां न च वाच्यं तर्हि भगवत्समयस्तेषु कथं नोपलभ्यत इति समुद्रस्य सर्वसरिन्मयत्वे-

ऽपि विभक्तासु तास्वनुपलम्भात् तथा च वक्तृवचनयो-
रैक्यमध्यवस्य श्रीसिद्धसेनदिवाकरपादाः ।

उदधाविव सर्वसिन्धवः
समुदीर्णास्त्वयि नाथ दृष्टयः ।
न च तासु भवान्प्रदृश्यते
प्रविभक्तासु सरित्स्विवोदधिः ॥१॥

अन्ये त्वेवमाचक्षते यथा अन्योन्यपक्षप्रतिपक्षभावात्परे प्रवादा मत्सरिणस्तथा तव समयः सर्वनयान्मध्यस्थतयाऽङ्गीकुर्वाणो न मत्सरी यतः कथंभूतः पक्षपाती पक्षमेकपक्षाभिनिवेशं पातयति तिरस्करोतीति पक्षपाती अत्र च व्याख्याने न मत्सरीति विधेयपदं पूर्वस्मिंश्च पक्षपातीति विशेषः अत्र च क्लिष्टाक्लिष्टव्याख्यानविवेको विवेकिभिः स्वयं कार्य इति काव्यार्थः ॥३०॥

इत्थंकारं कतिपयपदार्थविवेचनद्वारेण स्वामिनो यथार्थवादाख्यं गुणमभिष्टुत्य समग्रवचनातिशयव्यावर्णने स्वस्यासामर्थ्यं दृष्टान्तपूर्वकमुपदर्शयन् औद्धत्यपरिहाराय भङ्ग्यन्तरतिरोहितस्वाभिधानं प्रकाशयन्निगमनमाह ।

**वाग्वैभवं ते निखिलं विवेक्तु-**
**माशास्महे चेन्महनीयमुख्य ।**
**लङ्घेम जङ्घालतया समुद्रं**
**वहेम चन्द्रद्युतिपानतृष्णाम् ॥३१॥**

विभव एव वैभवं प्रज्ञादित्वात्स्वार्थेऽण् विभोर्भावः कर्म चेति वा वैभवं वाचां वैभवं वाग्वैभवं वचनसंपत्प्रकर्षं विभोर्भाव इति पक्षे तु सर्वनयव्यापकत्वं विभुशब्दस्य व्यापकपर्यायतया रूढत्वात् ते तव संबन्धिनं निखिलं कृत्स्नं विवेक्तुं विचारयितुं चेद्यदि वयमाशास्महे इच्छामो हे महनीयमुख्य महनीयाः पूज्याः पञ्चपरमेष्ठिनस्तेषु मुख्यः प्रधानभूतः आद्यत्वात्तस्य सम्बोधनं ननु सिद्धेभ्यो हीनगुणत्वादर्हतां कथं वागतिशयशालिनामपि तेषां मुख्यत्वं न च हीनगुणत्वमसिद्धं प्रव्रज्यावसरे सिद्धेभ्यस्तेषां नमस्कारकरणश्रवणात् "काउण नमक्कारं सिद्धाणमभिग्गहन्तु सो गिराहे" इति श्रुतकेवलिवचनात् नैवम् अर्हदुपदेशेनैव सिद्धानामपि परिज्ञानात् तथा चार्षम् "अरहन्तु वएसेणं सिद्धानज्जंति तेण अरिहाई" इति ततः सिद्धं भगवत एव मुख्यत्वं यदि तव वाग्वैभवं निखिलं विवेक्तुमाशास्महे ततः किमित्याह लङ्घेमेत्यादि तदा इत्यध्याहार्यं तदा जङ्घालतया जाङ्घिकतया वेगवत्तया समुद्रं लङ्घेम किल समुद्रमिवातिक्रामामस्तथा वहेम धारयेम चन्द्रद्युतीनां चन्द्रमरीचीनां पानं चन्द्रद्युतिपानं तत्र तृष्णा तर्षोऽभिलाष इति यावत् चन्द्रद्युतिपानतृष्णा उभयत्रापि सम्भावने सप्तमी यथा कश्चिच्चरणचङ्क्रमणवेगवत्तया यानपात्राद्यन्तरेणापि समुद्रं लङ्घितुमीहते यथा कश्चिच्चन्द्रमरीचीरमृतमयीः

भुक्त्वा चुलुकादिना पातुमिच्छति न चैतद्द्वयमपि श-
क्यसाधनं तथा न्यक्षेण भवदीयवाग्वैभववर्णनाकाङ्क्षाऽ-
पि अशक्यारम्भप्रवृत्तितुल्या आस्तां तावत्तावकीनव-
चनविभवानां सामास्त्येन विवेचनविधानं तद्विषया-
काङ्क्षापि महत्साहसमिति भावार्थः अथ वा लघु शोष-
णे इति धातोर्लङ्केम शोषयेम समुद्रं जङ्घालतया द्रुति
सहसाऽतिक्रमणार्थंलङ्घेस्तु प्रयोगे दुर्लभं परस्मैपदम्
अनित्यं वा आत्मनेपदमिति अत्र चौद्धत्यपरिहारेऽ-
धिकृतेऽपि यदाशास्महे इत्यात्मनि बहुवचनमाचार्यः
प्रयुक्तवांस्तदिति सूचयति यद्विद्यन्ते जगति मत्सदृशा-
मन्दमेधसो भूयांसः स्तोतार इति बहुवचनमात्रेण न
खल्वहंकारविकारस्तोतरि प्रभौ शङ्कनीयः प्रत्युत नि-
रभिमानताप्रासादोपरिपताकारोप एवावधारणीय इ-
ति काव्यार्थः । एष्वेकात्रिंशतिवृत्तेषूपजातिच्छन्दः॥२१॥

एवं विप्रतारकैः परतीर्थिकैर्व्यामोहमये तमसि निमज्जितस्य जगतोऽभ्युद्धरणे ऽव्यभिचारिवचनता-साध्येनान्ययोगव्यवच्छेदेन भगवत एव सामर्थ्यं दर्श-यन् तदुपास्तिविन्यस्तमानसानां पुरुषाणामौचितीचतुरतां प्रतिपादयति ।

**इदं तत्त्वातत्त्वव्यति-**
**करकरालेऽन्धतमसे**
**जगन्मायाकारैरिव**
**हतपरैर्हा विनिहितम् ।**

तदङ्गत्तुं शक्तो नियत-
मविसंवादिवचन-
स्त्वमेवातस्त्रातस्त्वयि
कृतसपर्याः कृतधियः ॥ ३२ ॥

इदं प्रत्यक्षोपलभ्यमानं जगद्विश्वमुपचाराज्जगद्वर्ती जनो हतपरैर्हता अधमा ये परे तीर्थान्तरीया हतपरे तैर्मायाकारैरिवैन्द्रजालिकैरिव शांवरीयप्रयोगनिपुणैरिवेति यावत् अन्धतमसे निविडान्धकारे हा इति खेदे विनिहितं विशेषेण निहितं स्थापितं पातितमित्यर्थः अन्धं करोतीत्यन्धयति अन्धयतीत्यन्धं तच्च तत्तमश्चेत्यन्धतमसं "समवान्धतमसः" इत्यप्रत्ययस्तस्मिन्नन्धतमसे कथंभूतेऽन्धतमस इति द्रव्यान्धकारव्यवच्छेदार्थमाह तत्वातत्वव्यतिकरकराले तत्वं चातत्वं च तत्वातत्वे तयोर्व्यतिकरो व्यतिकीर्णता स्वभावविनिमयस्तत्वातत्वव्यतिकरस्तेनकराले भयंकरे यत्रान्धतमसे तत्वेऽतत्वाभिनिवेशोऽतत्वे च तत्वाभिनिवेश इत्येवं रूपो व्यतिकरः संजायत इत्यर्थः अनेन च विशेषणेन परमार्थतो मिथ्यात्वं मोहनीयमेवान्धतमसं तस्यैवेहक्षलक्षणत्वात् तथा च ग्रन्थान्तरे प्रस्तुतस्तुतिकारपादाः

अदेवे देवबुद्धिर्या गुरुधीरगुरौ च या।
अधर्मे धर्मबुद्धिश्च मिथ्यात्वं तद्विपर्ययात् ॥

ततोऽयमर्थो यथा किलैन्द्रजालिकास्तथाविधसुशिक्षितपरव्यामोहनकलाप्रपञ्चास्तथाविधमौषधीमन्त्रहस्तलाघवादिप्रायं किंचित्प्रयुज्य परिषज्जनं मायामये तमसि मज्जयन्ति तथा परतीर्थिकैरपि तादृक्प्रकारदुरधीतकुतर्कयुक्तीरुपदर्श्य जगदिदं व्यामोहमहान्धकारे निक्षिप्तमिति तज्जगदुद्धर्तुं मोहमहान्धकारोपप्लवात्कष्टुं नियतं निश्चितं त्वमेव नान्यः शक्तः समर्थः किमर्थमित्यमेकस्यैव भगवतः सामर्थ्यमुपवर्ण्यते इति विशेषणद्वारेण कारणमाह अविसंवादिवचनः कषच्छेदतापलक्षणपरीक्षात्रयविशुद्धत्वेन फलप्राप्तौ न विसंवदतीत्येवं शीलमविसंवादि तथाविधं वचनमुपदेशो यस्यासावविसंवादिवचनो ऽव्यभिचारिवागित्यर्थः यथा च पारमेश्वरी वाग्न विसंवादमासादयति तथा तत्र तत्र स्याद्वादसाधने दर्शितं कषादिस्वरूपं चेत्यमाचक्षते प्रावचनिकाः

पाणवहाईयाणं पावट्ठाणाण जोउ पडिसेहो ।
झाणज्झयणाईणं जो अ विहीरास धम्मकसो ॥
वज्झाणुट्ठाणेणं जेण न वाहिज्जएतयं नियमा ।
संभवइ यपरिशुद्धं सो पुणधम्मं मि च्छेउत्ति ॥
जीवाइभाववाउ वंधाइपसाहगोइहंतावो ।
राएहिं परिसुद्धो धम्मो धंमत्तणमुवेइ ॥

तीर्थान्तरीयाप्ता हि न प्रकृतपरीक्षात्रयविशुद्धा वादिन इति ते महामोहान्धतमसे एव जगत्पातयितुं समर्था न पुनस्तदुद्धर्तुम् अतः कारणात्कुतःकारणात्कुम-

तध्वान्तार्णवान्तःपतितभुवनाभ्युद्धारणासाधारणसामर्थ्यलक्षणात् हे नाथ त्रिभुवनपरित्राणप्रवीण काकाऽवधारणस्य गम्यमानत्वात्त्वय्येव विषये न देवान्तरे कृतधियः करोतिरत्रपरिकर्मणि वर्त्तते यथा हस्तौ कुरु पादौ कुरु इति कृता परिकर्मिता तत्त्वोपदेशपेशलतत्तच्छास्त्राभ्यासप्रकर्षेण संस्कृता धीर्बुद्धिर्येषां ते कृतधियस्त्विद्वांसः पुरुषाः कृतसपर्याः प्राहिकं विनाप्यादिकर्मणो गम्यमानत्वात् कृता कर्त्तुमारब्धा सपर्या सेवाविधि र्यैस्ते कृतसपर्याः आराध्यान्तरपरित्यागेन त्वय्येव सेवाहेवाकितां परिशीलयन्तीति शिखरिणीच्छन्दोऽलङ्कृतकाव्यार्थः ॥ ३२ ॥

समाप्ता चेयमन्ययोगव्यवच्छेदद्वात्रिंशिकास्तवनटीका ॥

येषामुज्ज्वलहेतुहेतिरुचिरः प्रामाणिकाधूरपृशां
हेमाचार्यसमुद्भवस्तवनभूरर्थः समर्थः सखा ।
तेषां दुर्नयदस्युसंभवभयास्पृष्टात्मनां संभव
त्यायासेन विना जिनागमपुरप्राप्तिः शिवश्रीप्रदा ॥ १ ॥
चातुर्विद्यमहोदधे भगवतः श्रीहेमसूरेर्गिरां
गम्भीरार्थविलोकने यदभवद्दृष्टिः प्रकृष्टा मम ।
द्राघीयःसमयादराग्रहपराभूतप्रभूतावमं
तन्नूनं गुरुपादरेणुकणिकासिद्धाञ्जनस्योर्जितम् ॥ २ ॥
अन्यान्यशास्त्रतरुसंगतचित्तहारि
पुष्पोपमेयकतिचिन्निचितप्रमेयैः ।
दृष्ट्वा ममान्तिमजिनस्तुतिवृत्तिमेनां

मालामिवामलहृदो हृदये वहन्तु ॥ ३ ॥
प्रमाणसिद्धान्तविरुद्धमत्र
यत्किंचिदुक्तं मतिमान्द्यदोषात्।
मात्सर्यमुत्सार्य तदार्यचित्ताः
प्रसादमाधाय विशोधयन्तु ॥ ४ ॥
उर्व्यामेष सुधाभुजां गुरुरिति त्रैलोक्यविस्तारिणी
यत्रेयं प्रतिभाभरादनुमिति निर्दम्भमुज्जृम्भते।
किं चामी विबुधाः सुधीतिवचनोद्गारं यदीयं मुदा
शंसन्तः प्रथयन्ति तामतितमां संवादमेदस्विनीम् ॥ ५ ॥
नागेन्द्र गच्छ गोविन्दवक्षोऽलंकारकौस्तुभाः।
ते विश्ववन्द्या नन्द्यासुरुदयप्रभसूरयः ॥ ६ ॥
श्रीमल्लिषेणसूरिभिरकारि तत्पदगगनदिनमणिभिः।
वृत्तिरियं मनुरविमितशाकाब्दे दीपमहसि शनौ ॥ ७ ॥
श्रीजिनप्रभसूरीणां साहाय्योद्भिन्नसौरभा।
श्रुतावुत्तंसतु सतां वृत्तिः स्याद्वादमञ्जरी ॥ ८ ॥
बिभ्राणे कलिनिर्जयाज्जिनतुलां श्रीहेमचन्द्रप्रभौ
तद्दृब्धस्तुतिवृत्तिनिर्मितिमिषाद्भक्तिर्मयाविस्तृता।
निर्गन्तुं गुणदूषणे निजगिरां तान्नार्थये सज्जनान्
तस्यास्तत्त्वमकृत्तमा बहुमतिः सास्त्यत्र सम्यग्यतः ॥ ९ ॥

# इति श्रीस्याद्वादमञ्जरी समाप्ता ॥

चौखम्बा-संस्कृत-ग्रन्थमाला।

( ग्रन्थसंख्या ८ )

# स्याद्वादमञ्जरी।

विद्वद्वर मल्लिषेणप्रणीता

जैनदर्शननिरूपणपरा

आर्हतधुरन्धरश्रीसिद्धहेमचन्द्रनिर्मि-
तवीतरागस्तुतिव्याख्यानरूपा।

वृन्दावनाभिजनेन मध्वसंप्रदायाचार्य्येण श्री १०८ भगव-
त्कृष्णचैतन्यचरणोपदिष्टैकवीथीपथिकेन वाराणसे-
यसम्राट्संस्कृतपाठालयाचार्य्यपरीक्षाशालिना
श्रीदामोदर लाल गोस्वामिना परिशोधिता।



काश्याम्

बाबूहरिदासगुप्तेन

स्वकीय "विद्याविलास यन्त्रालये प्रकाशिता"

सन् १९०० ईस्वी।

वैक्रमसंवत् १९५७।

शुभम्।

॥ श्रीः ॥

# भूमिका ।

निखिलरसामृतमूर्त्तिः स्पृदुरुचिरुद्धतारकापालिः ।

कलितश्यामाललितो राधाप्रेयान् विधुर्जयति ॥

हंहो सर्वदर्शनरसपीयूषवर्षंवदसुमनसः सुमनसः !

अवधार्यतां धार्यतामर्हन्तो मुहुरार्हते विचारसङ्करप्रहरणार्हतया जैनजीवजीवनजीवातुदेशीया विपक्षसमक्षतत्पक्षक्षपणचोदक्षतोल्लिकमानसौरभसनाथेयं **स्याद्वादमञ्जरी** गुणगृह्यैर्भवादृशैरप्यवतंसयितुमुररीकर्तुम् । अस्याः खलु प्रणेता विपश्चिदपश्चिमो जैनाम्बरो **मल्लिषेणो**ऽभूत् । कदाऽनेन महाशयेन जनुरापि विषयो वा कतमोऽलमकारीत्युभयमपि न यथार्थतयाऽध्यवसातुं शक्यते । ग्रन्थस्त्वयं वेदैकनेत्रेन्दु १२१४ मितशके निरमायीत्यस्यैव ग्रन्थस्यावसानलेखतो निर्णीयते । एतेनासौ किल स्याद्वादमञ्जरी समस्तजगतीतलप्रसिद्धस्य संस्कृतप्राकृतापभ्रंशशौरसेनीपैशाचीमगधभाषाव्याकृतिव्युत्पत्तिवैशारदीवशसंचितसाराख्यशब्दशास्त्रग्रन्थकाव्यानुशासनहैमचन्द्रकोशादिनिबन्धुः प्राग्भवस्य जिनैकोपासनामार्मिकधुरन्धरस्य श्रीसिद्ध**हेमचन्द्रस्य** कृतिषु श्रीपार्श्वजिनस्तुतिरूपाया अन्ययोगव्यवच्छेदपराया द्वात्रिंशद्वृत्तात्मिकाया **वीतरागस्तुते**र्विवरणव्याजेन परमतानि निराचिकीर्षुणा स्वीयागमस्यैव सिद्धान्तत्वमित्यभिमन्यमानेन यस्त्वैदम्पर्यं वर्य्यविचार्यकार्य्यार्याणां तत्रभवद्भगवन्महर्षिश्रीपतञ्जलिगौतमजैमिनिचरणप्रभृतीनामविगीता अपि सदुक्तीर्विजिगीयमानेन समन्तभद्राद्युपदेशबीजप्ररूढे वीतरागस्तुत्यादिपल्लविते स्याद्वादरत्नाकरादिस्थपरप्रतिपन्नतत्त्वतत्त्वसहस्रोद्दामयुक्तिनिकरदोहदसततोज्जीविते जिनदर्शनतरौ महामहिमर्षिवरश्रीकृष्णद्वैपायनकपिलवात्स्यायनपादादिसमुपदिष्टानिराकार्ययसत्कल्पनैकघनाक्षतौपयिकसंतोषजुषचित्तचातकास्तिकग्रामणीभिः सर्वांशतो मान्यताफलमुपपादयिषुणा निजमतमननसेचकितमतिसन्मानवमनोमिलिन्दसंमदप्रदतया ऽन्वर्थाभिधाना व्यरच्यत । स्यादित्यनेकान्तद्योतको निपातः । तदुक्तम् ।

वाक्येष्वनियमद्योतिगम्यं प्रति विशेषणम् ।

स्यान्निपातोऽर्थयोगित्वात्तिङन्तप्रतिरूपकः ॥ इति ॥

भवतु वेत्थमेव कथमपि वाऽसौ । नैतावता "स्वार्थेषु को मत्सर" इति न्यायादभिजल्पनोपेचालवोऽपि जातिदमीयसद्युक्तिसूचितः । विचारतोऽसीमानन्दावहप्रभुवेदवाक्प्रतीपतामुपेतापीयं यथा भवादृशामपि मानसानि स्वकीयाभिनवपरामर्शसद्युक्तिप्रदेशा-

वलोकनारहस्यसंवादविलासेनाधीमयिष्यति न तथैतज्जातीयान्यतः प्रसादं सङ्क्रमिष्यन्ति तानि । सर्वं चैतदत्रभवतां समक्षमेव भविष्यति लोचनगोचरीकरणप्रयाससहनमात्रेण । षट्सु स्थलेषु चास्यां प्रमाणत्वेनोपन्यस्तानि छन्दांसि प्राकृताद्यनेकभाषामयान्यतो नैकव्याकरणेनैव सुज्ञानसाधुत्वानीति तत्तद्भाषानुशासनैर्व्याकृतिसापेक्षतया न सहसा निर्मात्रनवधानतासूचकानि भवितुमर्हन्ति । शोधने चास्याः पुस्तकमेकं स्वसन्निहितं नातिशुद्धमपरं चैतदपेक्षया किञ्चिच्छुद्धं जम्बूनृपालसंस्थापितकाशिकसंस्कृतपाठशालाऽध्यापक**पद्मनाभ**पण्डितानामित्येवं पुस्तकद्वयमवलम्ब्य कार्यान्तरव्यासक्तमनवकाशेनापि श्रीयुतविद्यानुरागिमहोत्साहि बाबू**हरिदास**गुप्त प्रार्थनामात्रविवशेन मया प्रावर्त्ति । यत्नपुरःसरं विहितेऽपि शोधनेऽक्षरयोजनामुद्रणादिदोषजाशुद्धयः शुद्धिपत्रे सूचिताः । ततोऽप्यवशिष्टा नैसर्गिकप्राणिदोषमूलास्ताः क्षीरनीरविवेचनचुञ्चुमरालचातुरीमञ्चन्तः सौजन्यधोरणीधौरेया विद्वन्मौलिभूता भवादृशाः संशोधयन्तु । अनुभवन्तु चैतदीयां सौरभसंपत्तिम् । धयन्तु चास्वादनीयमकरन्दमाधुरीम् । अमोघयन्तु मच्छोधनायासम् । सफलयन्तु च प्रकाशयितुरुत्साहवृद्धिं भावयन्तस्तदीयेदृशप्रवृत्त्यादिश्रमम् । प्रसीदतु चानेन व्यापारेण सर्वान्तर्यामी भगवान् श्रीराधिकारमण इति ।

**आशास्ते**

काश्याम्-<br>
विजयदशमीदिने<br>
सं० ५७<br>
१०।४।१९००।

वृन्दावनाभिजनो मध्वसंप्रदायाचार्यः<br>
श्री१०८भगवत्कृष्णचैतन्योपदिष्टतदीयीपथिको वाराणसेयसम्राट्संस्कृतपाठालयाचार्यपरीक्षाशाली<br>
**श्रीदामोदरलाल गोस्वामी**



# स्याद्वादमञ्जरीसूचीपत्रम् ।

इति।

# शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धयः | शुद्धयः । | पृष्ठे | पङ्क्तौ | अशुद्धयः | शुद्धयः |
|---|---|---|---|---|---|---|---|
| १ | ६ | गुरुः | गुरु | २१ | २२ | क्रमं | क्रमम् |
| २ | २ | तं | तम् | २२ | ४ | स्याऽक्र | स्याक्र |
| ३ | १४ | गच्छत्र | गच्छ | २२ | ५ | प्या | प्या |
| ३ | २२ | तां | ताम् | २२ | १६ | नी | नी |
| ३ | २४ | स्त्वहि | स्त्वहि | २२ | १८ | ष्वे | ष्वे |
| ४ | १ | त्यदु | त्यदु | २२ | १९ | त्प | त्य |
| ४ | १४ | नार्थं | मार्थम् | २३ | २ | । | ॥५॥ |
| ५ | २ | ह्रत्प | ह्रत्य | २३ | १७ | त्प | त्प |
| ५ | ३ | द्विं | र्द्धि | २४ | २२ | त्वप्ने | त्वप्ने |
| ५ | ६ | तर | त्तर | २५ | ९ | ह्रेवा | ह्रेवा |
| ५ | १२ | सं | सं | २६ | १ | वाणी | वाणी |
| ६ | ६ | नार्थं | नार्थम् | २६ | १६ | त्या | त्या |
| ६ | २२ | पात | पात्त | २७ | २ | न्नि | ल्लि |
| ७ | ८ | क्वान्तं | क्वान्तम् | २७ | ४ | द्व्वे | द्वे |
| ७ | ९ | श्रेष्टं | श्रेष्ठम् | २७ | ६ | द्वे | द्वे |
| ७ | ९ | विस | त्रिसं | २७ | १४ | त्प | त्य |
| ७ | १० | स्वा | वा | २७ | २१ | त्प | त्य |
| ७ | १८ | त्रु | त्रु | २८ | ७ | त्प | त्य |
| ८ | ३ | नाय | प्राय | २८ | ९ | त्प | त्य |
| ९ | १८ | त्वां | त्वाम् | २९ | ९ | सर्व्वे | सर्वे |
| १० | २१ | स्यै | स्यै | ३० | २२ | भिन्नदेशे | अत्यर्थमेवभिन्नदेशे |
| ११ | १७ | व्यांव | व्यांव | ३१ | ३ | स्पा | स्या |
| १३ | १० | पयं | पयम् | ३१ | २ | ब | ब |
| १४ | ५ | किच | किंच | ३२ | ७ | दते | दत्ते |
| १६ | १२ | उत | उत्त | ३२ | ७ | मेव | मेव |
| १६ | १६ | ष्टं | ष्टम् | ३४ | १७ | क्का | क्का |
| १६ | २ | पास्तं | पास्तम् | ५२ | १२ | ॥ | ॥६॥ |
| १६ | २१ | कस्य | कस्य | ३५ | १५ | वद्धाः | वद्धाः |
| १८ | १४ | दुत | दुत्त | ३६ | ११ | हृ | हृ |
| १८ | १७ | त्प | त्य | ३७ | १० | नं | नम् |
| १८ | २१ | वादि | वादि | ३७ | १८ | तं | तम् |
| २० | १ | स्याद्रि | स्यादि | ३८ | १४ | ह्म | ह्म् |
| २१ | २२ | त्प | त्य | ३९ | १८ | | ॥७॥ |

| पृष्ठे | पङ्क्तौ | अशुद्धयः | शुद्धयः |
|---|---|---|---|
| ४० | १० | ह्व | ह्व |
| ४२ | २ | भ्म | भ्म |
| ४३ | १० | आनु | अनु |
| ४३ | १५ | ह्रति | ह्रत्ति |
| ४३ | २२ | दन्यदम ल्लवाम | दल्यन्तव्य |
| ४४ | १५ | द्व: | व्द: |
| ४५ | ११ | च्छ्रि | च्छि |
| ४६ | ७ | द्वा | द्‌वा |
| ४६ | १० | द्वं | द्वं |
| ४६ | १९ | न्र | न्व |
| ४६ | २३ | वाथ | वाच |
| ४७ | ३ | ह्वानि: | ह्वानि: |
| ४७ | ३ | द्दृ | द्दव |
| ४७ | १२ | कभा | काभा |
| ४७ | १७ | स्य: | स्यु: |
| ४८ | १४ | द | दा |
| ४९ | ६ | ध्पु | प्पु |
| ४९ | १९ | दिच | दिवस |
| ५० | ६ | ज्ञान | ज्ञाना |
| ४९ | २१ | मग्य | मग्ट |
| ५० | १९ | त्तं | त्तु |
| ५१ | ४ | मपि | मयि |
| ५३ | २३ | यादु | याद्दु |
| ५४ | १८ | त्यस्तु | त्यस्तु |
| ५५ | ३ | सव | सत्र |
| ५५ | १६ | नैव | नैवं |
| ५५ | १७ | मेव | एव |
| ५५ | १८ | त्वा न्न | त्वान्मोचमु खिऽनुरागलानि ह्रत्तिहेतुत्वान्न |
| ५५ | २२ | ह्वं | ङ् |
| ५५ | २३ | सवे | संवे |
| ५६ | ७ | योग | योयग |
| ५६ | २१ | ज्ञात | ज्ञान |
| ५६ | २४ | । | ॥८॥ |
| ५७ | ७ | ॥८॥ | ॥९॥ |
| ५७ | ८ | ह्रष्टा | दृष्ट |
| ५७ | ११ | धार | धार |

| पृष्ठे | पङ्क्तौ | अशुद्धयः | शुद्धयः |
|---|---|---|---|
| ५८ | १६ | र्थि: | र्थि: |
| ५९ | ७ | टप | प्र |
| ६१ | २३ | व्यारा | व्यापारा |
| ६२ | २४ | नुप | नुप्र |
| ६३ | ६ | वध्र | वध्न |
| ६३ | १० | पने: | पत्ते: |
| ६३ | २२ | नामि | नानामि |
| ६४ | ३ | संध | संघ |
| ६४ | ८ | रष्ठ | रष्ट |
| ६४ | १३ | नेया | नैया |
| ६५ | ४ | ब | व |
| ६ | ५ | षिर: | षि: |
| ६६ | २१ | ताद्दीङ्क | तादृशी |
| ६६ | २३ | तुकांश | तुकांश |
| ६८ | १३ | सभ्य | सम्य |
| ६९ | १४ | कल्य | काल्य |
| ७१ | २३ | ग्रन्द्द | ग्रद्ध |
| ७२ | ६ | व्द | व्द |
| ७२ | ८ | व्द | व्द |
| ७२ | १२ | व्दे | व्दे |
| ७२ | १२ | च्छ | च्छ |
| ७३ | २० | प्राथा | प्रधा |
| ७४ | ३ | वन्थ्या | वन्ध्या |
| ८० | १२ | मावा | मवा |
| ८२ | १७ | ड्डं | ड्डं |
| ८५ | १८ | ङ्घ्र | ङ्घ |
| ८६ | १३ | वादा | वदा |
| ८७ | ६ | दिप्री | दिप्रीति |
| ८७ | १० | कर्मा | कर्मे |
| ८७ | ११ | याप्ती | प्राप्ती |
| ८७ | १३ | ष्ठ | ष्ट |
| ८९ | २४ | रप | प्य |
| ९० | २ | पृप | प्य |
| ९१ | ५ | कल्प | कल्पं |
| ९१ | ११ | नचे | नचे |
| ९१ | १४ | त्यनु | त्यत्वानु |
| ९२ | १७ | ज्ञात्पा | मुत्वा |
| ९२ | १८ | धन्ता | दत्ता |
| ९३ | १० | बध्या | बध्या |

| पृष्ठे | पङ्क्तौ | अशुद्धयः | शुद्धयः |
|---|---|---|---|
| ९४ | ५ | ह्ृ | ह्ृ |
| ९४ | ८ | बम्ध्या | वन्ध्या |
| ९५ | | व्द | व्द |
| ९८ | २ | तद्ब्र | तद्ब्र |
| ९९ | ७ | ब्रह्म | ब्रह्म |
| १० | १५ | बा्र | वा्र |
| १०२ | १९ | व्दा | व्दा |
| १०३ | १८ | सामा | समा |
| १०८ | २४ | ग्राह्य | ग्राह्य |
| १०९ | १९ | व्दे | व्दे |
| १०९ | १९ | त्यास | त्यस्ति |
| १०९ | २४ | वी | व्दी |
| ११० | २ | व्द | व्द |
| ११० | १२ | व्द | व्द |
| ११० | १४ | व्द | व्द |
| ११० | १५ | व्द | व्द |
| ११० | १५ | व्द | व्द |
| १११ | ३ | व्द | व्‌द |
| १११ | ३ | व्‌द | व्द |
| १११ | २० | भाव | भावा |
| १११ | २ | रूपं | रूपम् |
| ११४ | ७ | व्‌दा | व्‌दा |
| ११६ | ७ | ननापि / नापि | नसुष्यतेनापि |
| ११६ | १० | व्‌द | व्‌द |
| ११६ | २० | वैष | वैष |
| ११७ | १४ | व्‌द | व्‌द |
| ११७ | २० | व्‌दे | व्‌दे |
| ११७ | २३ | व्‌द | व्‌द |
| ११८ | १ | व्‌द | व्‌द |
| ११८ | १ | व्‌द | व्‌द |
| ११८ | ३ | व्‌द | व्‌द |
| ११८ | ९ | व्‌द | व्‌द |
| ११८ | ९ | व्‌द | व्‌द |
| ११८ | १० | व्‌द | व्‌द |
| ११८ | ११ | व्‌द | व्‌द |
| ११८ | ११ | व्द | व्‌द |
| ११८ | १२ | व्‌द | द्‌व |
| ११८ | १३ | व्‌द | व्‌द |
| ११८ | २३ | ब्र | ब्र |
| ११९ | २१ | व | ब |
| १२४ | १२ | द | ,व्‌द |
| १२६ | २१ | स्य | स्य |
| १२७ | ४ | सम्वे | सर्वे |
| १३१ | २ | रिक्त | रिक्तं |
| १३३ | १४ | तयोस्तयो | तयोरुभयो |
| १३५ | १६ | ह्र | ह्र |
| १३५ | १८ | ह्र | ह्र |
| १३६ | १ | ग्रास्तु | ग्राःस्तु |
| १४२ | २१ | तमत् | तमं |
| १४९ | २ | वाध | बा |
| १४८ | १४ | यस्य | यस्यै |
| १४९ | २२ | घना | घना |
| १५० | २० | तत्वना / ध्यात्मिका | तत्त्वं ना / ध्यमिका |
| १५१ | ९ | सिद्धिप्राप्तः | सिद्धिःप्राप्त |
| १५४ | १५ | प्रच्च | प्रेच्च |
| १५४ | २० | सांता | संता |
| १५८ | ६ | दार्ढ्ये | दार्भ्य |
| १५९ | १२ | चित्ता | चित्ती |
| १६६ | ११ | दाद्य | दाद्या |
| १६६ | २१ | घात | घात् |
| १६८ | ४ | द्रूप | द्रूपा |
| १७६ | ११ | तीर्थि | तीर्थिं |
| १७७ | २३ | री | री |
| १७९ | १४ | स्य | स्य |
| १८० | १७ | व | ब |
| १९१ | ११ | द | दु |
| १९२ | २४ | व्योम | व्योम |
| १९३ | ३ | द | व्‌द |
| २०८ | २० | "च | च" |
| २०९ | ६ | मं | सं |
| २०९ | १२ | सामा | समा |
| २११ | १९ | ॥३७॥ | ॥३०॥ |

इति ।